शंकरसुकृतसमूहा किंकरदेवादिरङ्कवीणा च ।
शङ्कादिमोहहन्त्री लसतु ममाक्ष्णोः शशाङ्कमौलितला ॥ ६२ ॥

कुचकुम्भाश्लेषवशादाहृतहरचित्तवृत्तिरमराणाम् ।
मनुजानामपि नित्यं दैवतमेषा चकास्ति गिरिकन्या ॥ ६३ ॥

परितुष्टा हरभजने निजगलकलगीतिविजितपरपुष्टा ।
सूचितसुररिपुकष्टा परमकलत्रं हरस्य तज्जयति ॥ ६४ ॥

सततालोलितदयया दृशाम्ब मां पश्य सरसिजातरुचा ।
परमशिवे निर्वृतिमहमवाप्य तेनैव तावको भक्तः ॥ ६५ ॥

सरसकविता च संपच्चाक्षोभ्यं मण्डलाधिपत्यं च ।
ननु जायते नृणां किल तव वीक्षावैभवेन भवकान्ते ॥ ६६ ॥

त्वन्मौलिचन्द्रविसृमरकरधाराभिः कृताभिषेका त्वम् ।
द्विगुणितदयार्द्रहृदया परिपुष्यसि मङ्गलानि भक्तानाम् ॥ ६७ ॥

गौरि नगाधिपतनये शशिशेखरदिव्यमहिषि मां पाहि ।
इति किल कलिताञ्जलयः सेवन्ते सुरनरादयो नित्यम् ॥ ६८ ॥

परमेश्वरदयिते त्वत्पदपद्मयुगार्चनारताः सन्तः ।
कलयन्ति गाङ्गसलिलं पुष्पाण्यपि भक्तिभारसंपन्नाः ॥ ६९ ॥

शृङ्गारागमसारा तव लीला जयति चेतसि भवस्य ।
अत एव स्वाङ्गे त्वामारोपयदाशु विजितकामोऽपि ॥ ७० ॥

ननु मातरम्ब मन्दस्मितलीलादिकमुदीक्ष्य शशिमौलिः ।
विरहासहिष्णुरनिशं वहति त्वां नैजवपुषि सानन्दम् ॥ ७१ ॥

तव शंकरि भूषोरगलसदुरुमणिदम्भतः शिवः काले ।
नीराजनमातनुते भक्तहितार्थी सुमङ्गलावाप्त्यै ॥ ७२ ॥

तव पादभक्तिरम्ब क्षितिधरतनये तनोति कविसूक्तिम् ।
अमरश्रियमथ सहसा धराधिपत्यादिकं नृणाम् ॥ ७३ ॥

आलोकनेन मातस्तव मनुजानां हृदि स्थितं च तमः ।
गलति हठात् पापालिः सहसामरलोकसंपदाभाति ॥ ७४ ॥

यः सूक्तिमालिकाभिस्तव पादयुगं समर्चयति जन्तुः ।
तत्पदयुग्मं तु सुराः कल्पमहीरुहसुमैश्च गाङ्गजलैः ॥ ७५ ॥

पार्वति तव मुखकमलालोकनतो गलितसंशयाः सन्तः ।
कैवल्यरूपकन्दलमासाद्य विधानतो जना भान्ति ॥ ७६ ॥

नन्वद्रिसुते मन्दस्मितकान्तिमिषात् त्वदीयकीर्तिझरी ।
दिक्सौधाञ्चलभागे विलसति नतरक्षणोत्थिता जगति ॥ ७७ ॥

करणविहीनान् मूढान् नरान् सुरान् पासि योगिनोऽपि तथा ।
लोकाम्ब भावनाद्यैः काले काले नगेन्द्रतनये त्वम् ॥ ७८ ॥

नगराजवंशसंपद् दिव्या काचिद् विभाति हरमान्या ।
गणपतिमयूरवाहौ यत्तनयौ लोकसंपदे जयतः ॥ ७९ ॥

प्रतिदिनकलितामेनामञ्जलिकलिकामगाधिपतनूजे ।
अङ्गीकुरुष्व दयया तेनैव वयं कृतार्थाः स्मः ॥ ८० ॥

कल्याणकेलिभाजनमिह शर्वस्याप्रमेयतुष्टिकला ।
चन्द्रकलाविलसितनिजमौलितला भातु मानसे कापि ॥ ८१ ॥

विनतजनबन्धहारिणि कल्याणि पुरारिसुकृतपरिपाके ।
बध्नीमो वयमञ्जलिमनुदिनममितात्मचित्सुखावाप्त्यै ॥ ८२ ॥

कंदर्पागमसारा लसदुरुहारा च मङ्गलाकारा ।
ताराधिपवासलसन्मौलितला भातु मानसे देवी ॥ ८३ ॥

नतहंसावलिरेषा गतिजितहंसावली च गिरितनया ।
शिशिरीकरोति लोचनमालामालापविजितशुकवाणी ॥ ८४ ॥

शुकवाणीसदृशीयं मम वाणी हरकुटुम्बिनीनिकटम् ।
न खलु करोति प्राप्ता मुदमस्या मधुरमन्दहासजुषः ॥ ८५ ॥

शशिशकलकलितमौलिस्त्रिलोचना कुङ्कुमच्छाया ।
पाति जननी जनानां किंनरयक्षादिगेयमाहात्म्या ॥ ८६ ॥

निजतनुतेजःप्रसरैरिन्दुकलोत्तंसलसितमौलितला ।
पूरयति लोकमाता त्रिभुवनमिदमात्तकौतुका पीठे ॥ ८७ ॥

तव मातरङ्घ्रिसरसिजभक्तिविशेषात्तवैभवा हि नराः ।
वैमानिकपदवीष्वप्याशारहिता विशन्ति ते धाम ॥ ८८ ॥

तव हारमणिप्रभया पार्श्वस्थितशंभुचन्द्रमौलिकला ।
संप्राप्तपूर्णमण्डलशोभा सततं विराजते मातः ॥ ८९ ॥

अर्धाङ्गशंभुभूषणफणामणिप्रचुरकान्तिवीचीभिः ।
तव हस्तहरिणपोतः शश्वद् धावति नवीनतृणबुद्ध्या ॥ ९० ॥

नाथकलानुगुणं ते रूपं जगदम्ब सर्वबुधवन्द्यम् ।
पर्वतराजसुते नः श्रेयःश्रेण्यै तदस्तु कलितदयम् ॥ ९१ ॥

कैरातो वेषो वा भिक्षाटनरूपमन्यदपि शंभोः ।
सर्वं तत् त्वत्कलया लसितं भात्यत्र भूधरेन्द्रसुते ॥ ९२ ॥

त्रिपुरविजयश्च मातस्त्वत्कोपादरिषु चन्द्रमौलेस्तु ।
आसीत् सुलभकलः किल ते कीर्तिः कीर्तिता दिशां वलये ॥ ९३ ॥

तव पादाम्बुजसेवादरेण मातस्तव स्तुत्याम् ।
यैः कलिता मतिरेषां चरणौ पूज्यौ हि नाकिनां वृन्दैः ॥ ९४ ॥

तव पादभक्तिभूम्ना पाण्डित्यं सर्वसंमान्यम् ।
कीर्तिं च सुखं लभते भक्तस्ते मातरचलसुते ॥ ९५ ॥

परिफुल्लकमलसुषमासंमान्यैस्ते कटाक्षैर्यः ।
भात्यङ्कितो धरण्यां स तु धनदो वा महेन्द्रो वा ॥ ९६ ॥

कमलाक्षमुखैर्देवैः फक्कृतगीर्भिस्तव स्तुतौ मातः ।
कथमम्ब मानुषोऽहं स्तोतुं त्वां शक्नुयां मन्दः ॥ ९७ ॥

तव पादपद्मभक्तिर्धरणिधरेन्द्रस्य कन्यके काले ।
वाचालीकुरुते मां मन्दमपि स्तोतुमादराज्जननि ॥ ९८ ॥

जननि विना पुण्यानां खण्डं त्वामीक्षितुं नयनैः ।
शक्ता नैव हि मनुजास्ते रूपं तत् परं जयति ॥ ९९ ॥

नाकिनगराम्बुजाक्षीनिटिलसुमामोदवासितं मातः ।
तव चरणपङ्कजं मे कृन्तति मोहादिकं हृदये ॥ १०० ॥

परमेश्वरस्य दयितापादपयोजातपांसवो धन्याः ।
कृतपुण्यानां मूर्तिषु भासन्ते सर्वशुद्धये ह्येते ॥ १०१ ॥

तव पादजलजरेणुस्पर्शनसंजातवैभवा मनुजाः ।
धिक्कृतनाकेशपदास्तव सारूप्यादिसंपदुल्लसिताः ॥ १०२ ॥

जननि तवालक्तरत्नप्रभाप्ररोहैर्गिरीशशिरसि कला ।
चान्द्रमसी सा भजते जपाप्रभालेपनं रम्यम् ॥ १०३ ॥

काञ्च्यां वा कैलासे मेरौ वा भक्तमानसाम्भोजे ।
परमशिववामभागे राजति कालेऽम्बिका ख्याता ॥ १०४ ॥

ध्यानपरीवाहाङ्कुरकलितं ते कुसुमकोमलं हि वपुः ।
योगिहृदयाम्बुजान्तर्जननि विभाति स्फुटाकारम् ॥ १०५ ॥

येषामञ्जलिकलिकालसितं करयुगमिदं काले ।
न प्रेरयति कृतान्तो निजदूतान् तेषु ते परं गुरवः ॥ १०६ ॥

कारुण्याकुलितहृदा तयाम्बया भक्तपापालिः ।
न हि गण्यते गिरीशोऽप्यस्मिन् सततं कृतप्रसादश्च ॥ १०७ ॥

जगतः पितरावेतौ रक्षाहेतोर्निजाङ्घ्रिभक्तानाम् ।
राजत इह बहुरूपौ जनदृक्दृश्यौ च देववन्द्यौ च ॥ १०८ ॥

सा भगवती पुरस्तादास्तां नः शांकरी जननी ।
यद्वीक्षालवहीनाः पीड्यन्ते तप्तगात्राश्च ॥ १०९ ॥

जातपराक्रमकलिका दिशि दिशि किंनरसुगीतनिजयशसः ।
धन्या भान्ति हि मनुजा यद्वीक्षालवविशेषतः काले ॥ ११० ॥

वाचां सनातनीनां विश्रान्तिस्थानकं हि यत् स्थानम् ।
करुणापालितलोकत्रितयं तद् भाति सुकृतिहृदयतटे ॥ १११ ॥

श्रुतिमौलिभूषणं ते पदारविन्दं जनः काले ।
भक्त्या प्रणम्य बहुजननगरे सिंहासने लसति ॥ ११२ ॥

श्यामा चन्द्रकलोज्ज्वलमौलिरियं शांकरी काले ।
ध्यानजपादौ पुण्यात्मनां हृदि प्रस्फुरत्यमले ॥ ११३ ॥

त्रिभुवनरक्षाहेतोरङ्गीकृतगिरिशदेहयष्टिरियम् ।
राजति राजतपीठे त्रिभुवनसुन्दररुचात्तबहुकोणे ॥ ११४ ॥

निश्चलदीपकला सा रक्षितमरुदौष्ण्यहीननिजरूपा ।
शूलिस्नेहोल्लसिता जनहृत्तमसां निहन्त्री च ॥ ११५ ॥

निगमान्तमध्यवीथीमहामणिः सर्वमूल्या च ।
भक्तिक्रया च काले केयूरमणिश्च शूलिनो जयति ॥ ११६ ॥

कल्याणसंततेर्या कलिता जन्मस्थलीति विबुधेशैः ।
नः कल्याणाय स्यात् सा गौरी मेदुरा दयया ॥ ११७ ॥

तव केशकान्तिविसरे राहोः शङ्का शिरःस्थेन्दोः ।
ग्रसनादिदैन्यहारिप्रभावमालोच्य ते सौम्यः ॥ ११८ ॥

मन्दस्मितरुचिभरिते पुरःस्थले तेऽर्चनाहेतोः ।
न्यस्तानि हि पुष्पाणि भ्रमराक्षेपात् स्फुटं भान्ति ॥ ११९ ॥

क्षीरसहोदरमन्दस्मितरुचिनिरसितनतालिहृत्तिमिरा ।
सा जयति शांकरी किल शंकरसंस्तूयमानविभवा च ॥ १२० ॥

मन्दानामपि मञ्जुलकवित्वरसदायिनी जननी ।
कापि करुणामयी सा लसतु पुरस्तात् सदास्माकम् ॥ १२१ ॥

तापहररसविवर्षणकृतकुतुका कापि नीलनलिनरुचिः ।
कादम्बिनी पुरस्तादास्तां नः संततं जननी ॥ १२२ ॥

करुणाकटाक्षलहरी कामायास्तु प्रकामकृतरक्षा ।
गौर्या गिरिपतिमान्या सत्सुखदाने भृशं ख्याता ॥ १२३ ॥

ऐक्यमनीयत नितरां यदादरेणेन्दुमौलिना पूर्वम् ।
तत् तेजो हृदि लसतु स्थिरे च निष्कल्मषेऽस्माकम् ॥ १२४ ॥

यत्पदरेखा मान्या लेखादीनां शुभोदये निभृतम् ।
सा लोचने पुरस्तादास्तां नः शशिकलोल्लसन्मौलिः ॥ १२५ ॥

यस्याविर्भाववशान्मान्योऽभूद् भूधरेन्द्रोऽपि ।
तत् पार्वतीति संज्ञं गौरी दाक्षायणी च लोकाम्बा ॥ १२६ ॥

मारारातिमनोहरलावण्या कुसुममृदुशरीरेयम् ।
निजकरुणापाङ्गसुधापूरणकृतवैभवा भाति ॥ १२७ ॥

धनधान्यकीर्तिकविताललनासुतहर्म्यमुख्यकामपरैः ।
तैर्नूनमर्चिताचलसुताङ्घ्रिजलजैस्तथाभूतैः ॥ १२८ ॥

गिरिशशरीरविहारि त्रातजगत् तत् परं ज्योतिः ।
शारदसरसिजनयनं मम गौरीरूपमाविरस्तु हृदि ॥ १२९ ॥

अचलसुतया सनाथा वयमेते धूतपापकलाः ।
शशिशिखरं चर्मधरं गङ्गाधरमीक्ष्य मोदन्ते ॥ १३० ॥

प्रौढान्धकारनिरसनचणमेतत् पार्वतीरूपम् ।
परमं ज्योतिर्लसति स्फुटं च सद्गुणसमावृतं हृदये ॥ १३१ ॥

दहराकाशविहारि ज्योत्स्नालसदुत्तमाङ्गमिदमाद्यम् ।
चिन्तारत्नं गिरिशप्रकामभाग्यं च लोकदीपकला ॥ १३२ ॥

पुण्याङ्कुरवृद्धिकरं गौरीरूपं सदा ध्याये ।
यच्छिवनेत्रमहोत्सवनिभृतं रक्षितजगत्त्रितयम् ॥ १३३ ॥

सूर्यसुताकल्लोलोल्लसनदशारम्यनेत्रलहरीभिः ।
श्रेयःसंततिमचिरात् तरङ्गयति नः सदा देवी ॥ १३४ ॥

भूधरकन्या सेयं सादरदत्तार्हणादिबहुतोषा ।
वादरसविजयदा नः पादरसासक्तकलितबहुभाषा ॥ १३५ ॥

प्रौढतमालवनालीरुचिभरकमनीयनेत्रविस्फारैः ।
दिशि दिशि कलिता संपद् यया तया नः कुलं जयति ॥ १३६ ॥

निजतारुण्यविहारैर्मोहकरं शूलिनोऽपि यत् तेजः ।
तत् कुमुदिनीशखण्डस्फुरच्छिरःकरलसद्धनुर्वर्यम् ॥ १३७ ॥

शंकरपुण्याङ्कुरकृतरूपं पाथोजनयनं च ।
पृथुजघनकुचयुगं च त्रातजगद् दग्धदैत्यचयम् ॥ १३८ ॥

नीलनलिनीसुमालीललितकचं शंकरार्हललितकुचम् ।
कैलासपीठमध्ये भाति सदा ध्येयमाराध्यम् ॥ १३९ ॥

स्मरणदशयापि कापि प्रदीपिका नाशिनी तमसाम् ।
निगमततिसौधवलभीप्रकाशिनी नित्यतेजस्का ॥ १४० ॥

पुररिपुवामाङ्कतलोद्भासितगात्रं महः किमपि ।
हृदि लसतु संततं मे निरस्तसंसृतितमोराशि ॥ १४१ ॥

निगमान्तमध्यपञ्जरशुकी शुकाद्यैः समाराध्या ।
करधृतपुण्ड्रेक्षुकला श्रेयःसंतानदायिनी नमताम् ॥ १४२ ॥

तव पादपद्मशोभाच्छुरितं पुरतः स्थलं गौर्याः ।
कृतपल्लवसंस्तरणं मत्वा तूष्णीं बभूव ते दासः ॥ १४३ ॥

नवजलधरनीलरुचा संमान्यैस्ते कटाक्षकान्तिभरैः ।
संकलितनित्यतोरणशोभं ते मण्टपास्थानम् ॥ १४४ ॥

राकाचन्द्रनिभास्या सा काश्यादिषु कृतात्मबहुपीठा ।
नाकादिराजविनुता शोकादिहरप्रभावजन्मकला ॥ १४५ ॥

पारावारसुताद्यैरारात्कलनीयनैजविभवा सा ।
वीराढ्यनैजरूपा दाराः कैलासवासिनो जयति ॥ १४६ ॥

धीरात्महृदयकमले धाराधरनीलचिकुरभारवती ।
क्षीरादिहृद्यवाणी धारा सा भाति पार्वतीरूपा ॥ १४७ ॥

परमशिवभाग्यधाटी काञ्चनशाटी ममास्तु हृदि सततम् ।
परिमलितवक्त्रवीटी कृतनतिघोटी गजादिपरिपाटी ॥ १४८ ॥

सन्मानसकासारे कृतपरमानन्दसंततिर्जननी ।
शंकरतत्त्वोन्मेषं कलयति काले दयासारात् ॥ १४९ ॥

एणाङ्कलसितमौलिः क्षीणानां रक्षिणी परमा ।
पाणावाहृतहरिणा वीणानुतिलालिता च सा जयति ॥ १५० ॥

मूकादीनां पुरहरमौल्यान्दोलनकरोज्ज्वला वाचः ।
यत्कारुण्यात् काले समुल्लसन्तीह सा मदीयधनम् ॥ १५१ ॥

सर्वेषां देवानामपि मर्त्यानां तथा गिरीशस्य ।
एका पुण्यश्रेणी गौरीरूपा हि सर्वदा जयति ॥ १५२ ॥

पशुपतिपुण्यश्रेणीपरिपाकं पार्वतीरूपम् ।
निजदृग्रक्षितलोकत्रयमिदमाराद् विराजते तेजः ॥ १५३ ॥

शीतलभूधरजनिता दयया च पुनस्तथा शीता ।
शीतललालयकटाक्षा सा जननी नः सदा जयति ॥ १५४ ॥

स्मृतिमात्रतापहान्यै कलितप्तानां जनानां सा ।
कृतसंकल्पानल्पाभरणा भरणाय हृदि लसति ॥ १५५ ॥

सुकृतिजनदृश्यरूपं दुष्कृतिजनदूरगं च तत् तेजः ।
कारुण्यपूर्णहृदयं तद्भावनतां तथा जयति ॥ १५६ ॥

तापिञ्छस्तबकरुचिर्जननी सा शांकरी भजताम् ।
निजदृक्पातप्रशमितदारिद्र्यादिर्लसति पीठे ॥ १५७ ॥

परमशिवास्थानतले नित्यं खेलनकृतादरं तेजः ।
तद् राजते मुनीनां हृदये निगमान्तसौधे च ॥ १५८ ॥

निश्चलभावभृतां तन्निश्चलरूपं विराजते तेजः ।
हंसीव मानसे मे मञ्जुलगतिदायिनी सुदृशाम् ॥ १५९ ॥

माधुर्यं वचसि गतौ गाम्भीर्यं नेत्रयोस्तैक्ष्ण्यम् ।
शैतल्यं हृदि च सदा यत्र हि दृश्यं तदेव जननी नः ॥ १६० ॥

निजशोभाजितकन्दुककुचयुगलश्रीजितेशहृदया सा ।
मनसि मम संनिधत्तां दत्तात्रेयादिभिर्वन्द्या ॥ १६१ ॥

निजमौलिचन्द्रकिरणप्रसारणेऽप्युल्लसत्सरोजयुगम् ।
दधती श्रवसोरेषा चकास्ति हृदये परा देवी ॥ १६२ ॥

मुखजिततारानाथा मखभुग्गणसेव्यचरणजलजाता ।
नखकान्तिपटलदम्भाद् गतिजितहंसावली विभातु हृदि ॥ १६३ ॥

कविताभाग्यविधात्री परिमलसंक्रान्तमधुपगणकेशा ।
मम नयनयोः कदा वा सा देवी कलितसंनिधानकला ॥ १६४ ॥

शशिखण्डवतंसश्रीः पशुपतिभाग्यं च तत् तेजः ।
मम नयनयोः कदा वा कर्णेजपलोचनं दिव्यम् ॥ १६५ ॥

तत् तेजः शाश्वतमिह सामान्यं भूनिवासकृताम् ।
द्युसदामपि जयति कृतादरं तदस्तु श्रियै काले ॥ १६६ ॥

शतमखनीलमणीनां प्रभाविसारप्रलोभतनुकान्त्या ।
श्रुतिमौलिसौधदीपश्रिया तया नाथवानहं काले ॥ १६७ ॥

कविकुलसूक्तिश्रेणीश्रवणानन्दोल्लसद्वतंससुमा ।
सा देवी मम हृदये कृतसांनिध्या कृतत्राणा ॥ १६८ ॥

पुष्पेष्वागमसारा पुरभिन्मानसविभेदिनिजकेलिः ।
विश्वविमोहनमूर्तिः सा देवी शांकरी जयति ॥ १६९ ॥

काशीकाञ्च्यादितटस्थिरासना मेखलाभिरामकटिः ।
मुग्धस्मेरमुखी सा या गौरी संपदां जननी ॥ १७० ॥

मुखविजितचन्द्रमण्डलमिदमम्भोरुहविलोचनं तेजः ।
ध्याने जपे च जपतां चकास्ति हृदये कवीश्वराणां च ॥ १७१ ॥

मञ्जुलकवितासंततिबीजाङ्कुरदायिनी रसालोका ।
जननि तवापाङ्गश्रीर्जयति जगत्त्राणकलितदीक्षेयम् ॥ १७२ ॥

अम्ब तवापाङ्गश्रीरपाङ्गकेलीशतानि जनयन्ती ।
पुरहन्तुर्हृदि जयति व्रीडामदमोहकामसारकरी ॥ १७३ ॥

दिनकरसुतातरङ्गावलिशोभाकृतकचाकचिश्रीश्च ।
शशिखण्डवतंसशिराः सा देवी शरणमर्थिनां परमम् ॥ १७४ ॥

कलकलनिनदत्काञ्ची काञ्च्यादितलस्थिरासना देवी ।
पुरहरभूषणमूर्तिः सा देवी शरणमस्माकम् ॥ १७५ ॥

पुरहरसहधर्मचरीं कचभारलसन्निशीथिनीशकलाम् ।
कविकुलमान्यचरित्रां पवित्रितक्षोणिभृत्कुलां वन्दे ॥ १७६ ॥

भक्तजनावलिकथितस्तुतिशतदत्तादरामिमां देवीम् ।
सरसकवनप्रदात्रीं भूषितशिववामभागरेखान्ताम् ॥ १७७ ॥

मङ्गलमूर्तिं किंनरकीर्तितनिजकीर्तिवल्लरीं जननीम् ।
मूर्तिमतीं कामकलां शम्भोरम्भोजलोचनां नौमि ॥ १७८ ॥

जितमन्मथमारकलादात्रीं शिवगात्रदिव्यभूषां ताम् ।
त्रिजगत्सुखजनयित्रीमम्बामम्बुदमनोज्ञतनुमूर्तिम् ॥ १७९ ॥

खण्डितसुरवैरिगणां चण्डकराद्यैः सुरैश्च नुतसदनाम् ।
मण्डितपुरहरदेहां ताण्डविनः सर्वमङ्गलां देवीम् ॥ १८० ॥

निजलोचनकृतसंपदमजकमलेक्षणशचीशसुरवन्द्याम् ।
भजनकृदन्तर्ज्योतिषमजतनयाद्यैश्च नित्यसेव्यकलाम् ॥ १८१ ॥

भरितभुवनामपर्णां सरिदुरुवीचीविलोलितात्मकचाम् ।
गिरिशकृतनित्यलीलां वरिवस्यादानतुष्टनिजहृदयाम् ॥ १८२ ॥

जननुतनित्यविभूतिं कनदुरुभूषावलीलसितदेहाम् ।
मनसाप्यगण्यतत्त्वां वनवासिध्यानगोचरात्मकलाम् ॥ १८३ ॥

नीलाम्बुजकान्तिमुषं बालार्कनिभात्मकर्णपूरवतीम् ।
मालालंकृतकण्ठां बालां स्कन्दस्य मातरं वन्दे ॥ १८४ ॥

शरणागतजनरक्षणकृतदीक्षावीक्षणेन जितशंभुः ।
कुलभूधरवरतपसां परिपाकः कोऽपि विजयते लोके ॥ १८५ ॥

कुसुमशरमथनमनसाप्यादरणीयात्मकामकेलिरियम् ।
जननी कल्याणततिं भजतां नः सादरात् तरङ्गयति ॥ १८६ ॥

मत्तगजमान्यगमना मधुरालापा च मान्यचरिता सा ।
मन्दस्मेरमुखाब्जा गौरी मम हृदयसारसे लसतु ॥ १८७ ॥

पुरहरनेत्रमहोत्सवतारुण्यश्रीर्निरस्तनतशत्रुः ।
ललितलिकुचाभकुचभरयुगला दृग्विजितहरिणसंदोहा ॥ १८८ ॥

कारुण्यपूर्णनयना कलिकल्मषहारिणी च सा गौरी ।
मुखजितशारदकमला वक्त्राम्भोजे सदा स्फुरतु काले ॥ १८९ ॥

शूलिमनोरथपात्रं संतप्तस्वर्णकाम्यनिजगात्रम् ।
आश्रितहिमवद्गोत्रं रक्षितनतबाहुजच्छात्रम् ॥ १९० ॥

कविकुलजिह्वालोलं शशिशेखरकलितरम्यबहुलीलम् ।
निरसितनतदुष्कालं वन्दे तेजः सदालिनुतशीलम् ॥ १९१ ॥

कमलसुषमानिवासस्थानकटाक्षं चिराय कृतरक्षम् ।
रक्षोगणभीतिकरं तेजो भाति प्रकाममिह मनसि ॥ १९२ ॥

कुमुदवनीशक्रीडास्थानायितकेशभारायै ।
नम उक्तिरस्तु मात्रे वाग्जितपीयूषधारायै ॥ १९३ ॥

बालकुरङ्गविलोचनधाटीरक्षितसुरादिमनुजान्तम् ।
नयनयुगासेव्यं तद् भातीह धरातले नियतम् ॥ १९४ ॥

कुशलविधये तदस्तु प्रसूनविशिखारिकृतलीलम् ।
कबलितपदनतदैन्यं तरुणाम्बुदमेचकं धाम ॥ १९५ ॥

जननि कदा वा नेष्याम्यहमारादर्चितत्वदीयपदः ।
निमिषमिव हन्त दिवसान् दृष्ट्वा त्वामादरेण कल्याणीम् ॥ १९६ ॥

कविवाग्वासन्तीनां वसन्तलक्ष्मीः पुरारिदयिता नः ।
परमां मुदं विधत्ते काले काले महाभूत्यै ॥ १९७ ॥

त्रिभुवनसुन्दररूपं तेजस्तद् भक्तितः समभ्यर्च्य ।
गरुडेन याति कुतुकादथवा हंसेन सुरसेव्यः ॥ १९८ ॥

तव पदपद्मे भक्तिर्न मे तथापि त्वदीयकृपयाहम् ।
ध्यायाम्यन्वहमम्ब त्वामारादादरात् सिद्ध्यै ॥ १९९ ॥

यो देव्याः पदसरसिजनतिभाक् तस्येह सिध्यन्ति ।
स्थिरविभुता सत्सङ्गः सायुज्यं चापि कालेन ॥ २०० ॥

हिमगिरितपःफलं तन्मुनिजनहृदयाब्जनित्यकृतनृत्तम् ।
करुणालोलापाङ्गं तत् तेजो भातु निःसमं वदने ॥ २०१ ॥

जननि तरङ्गय नयने मयि दीने ते दयास्निग्धे ।
तेन वयं तु कृतार्था नातः परमस्ति नः प्रार्थ्यम् ॥ २०२ ॥

मुनिहृदयपद्महंसी शिवकेलीसदनरत्नदीपकला ।
हिमवत्पुत्री कृपया मामवति महौषधी कलिव्याधेः ॥ २०३ ॥

प्रतिफलतु भावनायामस्माकं सा स्फुरत्कृपाधारा ।
पुरहरदृक्साफल्यं कैलासे किमपि निश्चितं तेजः ॥ २०४ ॥

सज्जनमानसधाम्ने नम उक्तिर्मे श्रुतीड्यनिजभूम्ने ।
शिववामभागधाम्ने महाविभूत्यै हि शंकरीनाम्ने ॥ २०५ ॥

देशिकमानसविहरणकलाजुषे भक्तिरस्तु मे तस्मै ।
यच्चन्द्रमौलिलोचनचापल्यं रक्षितस्वभक्तौघम् ॥ २०६ ॥

निजलोचनकेलिकलावशीकृतप्रसवबाणरिपुहृदयम् ।
दयया लोलितहृदयं तदस्तु तेजः पुरोऽस्माकम् ॥ २०७ ॥

सततं बद्धाञ्जलिपुटमुपास्महे तच्छुभप्रदं तेजः ।
यन्मरकतकान्तिलसत् प्रसूनशरवैरिपुण्यपरिपाकम् ॥ २०८ ॥

तीरं संसृतिजलधेः पूरं शंकरविलोचनप्रीतेः ।
सारं निगमान्तानां दूरं दुर्जनततेर्हि तत् तेजः ॥ २०९ ॥

नगराजकन्यका सा लसतु पुरोऽस्माकमादरकृतश्रीः ।
यत्प्रणमनाज्जनानां कवितोन्मेषः सदीडितो लसति ॥ २१० ॥

सन्नयनसारसालीपूषा भूषा च हरशरीरस्य ।
हिमगिरितनया येषा भाषास्तोत्रप्रिया च सा भाति ॥ २११ ॥

सफलयतु नेत्रयुगलं हतनतदुरिता हि सा परा देवी ।
धरणिधरनायकप्रियसुता च सोमार्धभूषितात्मकचा ॥ २१२ ॥

सुमनोवाञ्छादाने कृतावधानं धनं शंभोः ।
धिषणाजाड्यादिहरं यद्वीक्षणमामनन्ति जगति बुधाः ॥ २१३ ॥

को वा न श्रयति बुधः श्रेयोऽर्थी तामिमामम्बाम् ।
यामर्धचन्द्रशेखरसधर्मिणीमर्चयन्ति सुरनाथाः ॥ २१४ ॥

शमितनतदुरितसंघा हराय निजनेत्रकल्पितानङ्गा ।
कृतसुरशात्रवभङ्गा सा देवी मङ्गलैस्तुङ्गा ॥ २१५ ॥

कवितारसपरिमलितं करोति वदनं नतानां या ।
स्तोतुं तामहमारात् सा देवी सुप्रसन्नास्तु ॥ २१६ ॥

पुरहरवामोत्सङ्गे भजामि लसितं तु तत् तेजः ।
सृष्टिस्थितिलयकार्यं यज्जनयति कालभेदेन ॥ २१७ ॥

कल्याणदानकलनात् ख्याता सा शांकरी लोके ।
तद्वैभवकीर्तनतो वयमत्रासाः परानन्दाः ॥ २१८ ॥

मन्दहसितैर्वशीकृतशांकरहृदया हि भक्तानाम् ।
रक्षणकार्याय परं साम्बा कुम्भोद्भवादिभिर्वन्द्या ॥ २१९ ॥

निजमौलिचन्द्रकिरणप्रसारणाद्गाङ्गवीचिकापवनैः ।
तत्क्षणनिरसितसुरतश्रमा भवानीह राजते भूत्यै ॥ २२० ॥

मम गाहते हि हृदयं नयनयुगं त्रिपुरदमयितुर्भाग्यम् ।
यदकृत्रिमवाग्गुम्भैः स्तुत्यं ध्येय सदाभ्यर्च्यम् ॥ २२१ ॥

करधृतशूलाद्यायुधजालनिरस्ताखिलारिबृन्देयम् ।
कुन्दाभदन्तवदनानन्दायास्तु प्रकाममिह नमताम् ॥ २२२ ॥

कुचभारनम्रगात्रं निजजनिपरिपूतजनकवरगोत्रम् ।
सुरवैरिकलितकोपं गौरीरूपं तदस्तु हततापम् ॥ २२३ ॥

निटिलात्तवह्निनेत्रं लोलालकमेतदादृतं तेजः ।
निजकेल्यधीनशंकरमस्माकं चाक्षयं स्थानम् ॥ २२४ ॥

तव मन्दस्मितलहरीविशेषितरुचिर्गिरीशशशिकलः ।
तव रूपं गिरिशस्य स्वरूपमपि भाति योगिनां हृदये ॥ २२५ ॥

नीलारविन्दलोचनयुगलामम्बामहं नौमि ।
कालारिचित्तहरणे यल्लीलाः पाटवं नीताः ॥ २२६ ॥

शशधरभूषितमकुटी कविकुलवागब्जशरदियं देवी ।
आर्तत्राणपरायणविलोचना हिमवतः पुत्री ॥ २२७ ॥

श्रुतिपञ्जरकेलिशुकी शंकरपरिरम्भणोत्सुका माता ।
बहिरप्यन्तर्यमिनां चकास्ति लोकाम्बिका कृतत्राणा ॥ २२८ ॥

चिन्तितवस्तुविधात्री संततमपि लोकरक्षणैकरता ।
संदानितनाकिलसत्संतानसुमप्रगल्भधम्मिल्ला ॥ २२९ ॥

कलितत्रिवर्गपदवीमपवर्गदकल्यसेवनामम्बाम् ।
गाङ्गजलैर्नलिनदलैरारग्वधपत्रजालकैरर्च्याम् ॥ २३० ॥

शशिशेखरसर्वस्वं पूर्वाचार्यैः पुरस्कृतं तेजः ।
मामकचक्षुर्विषयं कदा नु कैलासकलितचङ्क्रमणम् ॥ २३१ ॥

मोहितभुवना देवी सा हितकरनित्यचिन्तना भजताम् ।
ताडितरिपुजनमान्या पीडितनिजभक्तभवभया जयति ॥ २३२ ॥

प्रत्यङ्गलसितभूषा सत्यं माता हि शरणमस्माकम् ।
कत्यं यमभयमस्याः स्तुत्यं जगतीह वैभवं मनुजैः ॥ २३३ ॥

अम्ब त्वमेव कमलासनादिवैभवविधात्री च ।
तां त्वां शरणं प्राप्ताः लोकेऽमुष्मिन् किमाशास्यम् ॥ २३४ ॥

कुङ्कुमरुचिलसिताङ्गं कमलासनमात्तकमलं च ।
हस्ताम्बुजधृतपुस्तकरुद्राक्षादि च तथा रूपम् ॥ २३५ ॥

जितमन्मथवरिवस्यासक्तं रूपं च ते मातः ।
कालानुकूलकलितं परतत्वविदां चकास्ति हृदयतटे ॥ २३६ ॥

हिमवन्नगेन्द्रकन्ये भूसुरकृतबहुलपूजया धन्ये ।
मान्ये सुमनःसंघैस्त्वां कलये हृदि सदा हिं कटिशून्ये(?) ॥ २३७ ॥

निरसितनिष्किंचनजनदैन्या कन्या धराधरेशस्य ।
दृक्कान्तिविजितहरिणा हरिणाराध्या च सा जयति ॥ २३८ ॥

विनतजनितापवर्गा सर्गादिकरी च सा देवी ।
निजलीलाहृतभर्गा दुर्गादिश्रेयसां जननी ॥ २३९ ॥

कवनकृतां तोषकृते जगदवनादिक्रियापुषे भवतु ।
शांकरिरूपाय परं नम उक्तिर्ज्योतिषेऽस्माकम् ॥ २४० ॥

फणिपतिभूषितदेहा हरभजनानन्दसंदोहा ।
तत्त्वैर्हृतसंदेहा चकास्तु हृदये विधूतजनमोहा ॥ २४१ ॥

जयति जननि त्वदीयं रूपं रविकोटितुलितमिदम् ।
एतन्नानाकारं काले कृतरक्षणं च भुवनेड्यम् ॥ २४२ ॥

मदनारिकण्ठसुषमासाक्षीभूतस्वबाहुयुगला सा ।
कुङ्कुमपङ्काङ्कितनुरेषा देवी चकास्ति बहुरूपा ॥ २४३ ॥

काञ्चीमणिलसितकटिः काञ्चीपुरभूषणं च तद्धाम ।
यन्मन्मथरिपुमान्यं निजलीलाकलितबहुरूपम् ॥ २४४ ॥

करपङ्कजधृतमाला सृष्टिस्थित्यादिबहुलीला ।
वीटीविलसितवदना विरचितनतहर्म्यवरसदना ॥ २४५ ॥

विसृमरनतानुकम्पा तं पातकिवर्गमादरादम्बा ।
रक्षति तनुजितशम्पा सा नः शरणं पुरः स्फुरतु ॥ २४६ ॥

शूलिनि सुरजनपालिनि कात्यायनि देवि मां पाहि ।
सुरलोककुसुममालिनि शिवखेलिनि चण्डिके पाहि ॥ २४७ ॥

भारति भैरवि शांकरि कपालिनि नमोऽस्तु ते नित्यम् ।
स्तुत्वैवमम्ब वाचा मनसाराध्यं नमामि ते पादम् ॥ २४८ ॥

कुटिलकचं लिकुचकुचं मृदुबाहुलतं च कुङ्कुमच्छायम् ।
विलसति शशधरमौलेः सर्वस्वं सुकृतपरिपाकः ॥ २४९ ॥

उन्मूलयति शुभेतरवार्तामप्यम्ब ते नाम ।
भजनादपि कीर्तनतः किं वा भाग्यं त्वदीयभक्तानाम् ॥ २५० ॥

परमशिवपुण्यकोटी निजगतिजितसन्मरालगतिधाटी ।
कृतनित्यकामकोटी कोटीरोल्लसितचन्द्रपरिपाटी ॥ २५१ ॥

चन्द्राभरणवतंसा कंसारिमुखैः सुरैश्च नुतचरिता ।
गजमुखषण्मुखजननी सास्माकं मानसे कृतास्थाना ॥ २५२ ॥

परमशिवदिव्यजाया मायामोहितसुरासुरा जननी ।
कुङ्कुमविलसितकायापायान्मां रक्षतीह कविगेया ॥ २५३ ॥

भूषितरत्नाभरणा शरणार्थिजनालिकल्पिताभरणा ।
मुदितनिजान्तःकरणा मरणादिध्वंसिनी सदावरणा ॥ २५४ ॥

श्रुतिसुदतीस्तबकायितचरणाम्भोजा च भोजाद्यैः ।
कृतपरिचरणा विस्तृतकरुणाम्बा शैलराजवरतनया ॥ २५५ ॥

अधरे लसितारुण्यं तनौ तु हरमान्यपूर्णतारुण्यम् ।
लोचनधृतकारुण्यं करे कुसुम्भादिसंभृतारुण्यम् ॥ २५६ ॥

तत्तेजो लसति हृदि स्मरारिसंमान्यबहुलीलम् ।
सृणिपाशाङ्कुशहस्तं प्रशस्तमस्तोदयादिहीनं च ॥ २५७ ॥

कलितचराचररक्षणमक्षीणोद्दामवैभवं किमपि ।
निखिलागमयन्त्रकलासारं तल्लसति पुरभिदा मान्यम् ॥ २५८ ॥

भवचित्तराजहंसी भवभयमोहादिभेदिनी शरणम् ।
सवरक्षणकृतदीक्षा शिववामाङ्गोल्लसितमूर्तिः ॥ २५९ ॥

तव चरणन्यासवशात् परिपूता भूरियं भूत्यै ।
देवेशमौलिसेव्या तां त्वामाराधयामि गिरितनये ॥ २६० ॥

क्षणमिह मातर्दूरे स्याद् यदि दृष्टिः शुभंकरी मान्या ।
अष्टैश्वर्योऽपि तदा विनष्टशोभो विकल्पश्च ॥ २६१ ॥

अत एव हि कारुण्याल्लोकाम्ब त्वं सदादृतभवाङ्गा ।
क्रीडसि रक्षसि काले जनयसि मोहादिकानथवा ॥ २६२ ॥

परमशिवकेलिरसिके यः कोऽपि जनस्तव स्तवं कुर्वन् ।
निरसितनाकेशपदस्तव सारूप्यं क्रमाद् भजति ॥ २६३ ॥

तव पादपद्मविसृमरकान्तिझरीं मनसि कलयंस्तु ।
निरसितनरकादिभयो विराजते नाकिसदसि सुरवन्द्यः ॥ २६४ ॥

बालमरालीगत्यै सुरगिरिधानुष्कमहितकलगीत्यै ।
विरचितनानानीत्यै चेतो मे स्पृहयते बहुलकीर्त्यै ॥ २६५ ॥

वितरणकलाप्रसक्तौ चिन्तामणिकामधेनुसुरवृक्षाः ।
ते दूरे तां त्वामहमाराधयितुं कृतप्रयत्नोऽस्मि ॥ २६६ ॥

विनमदमरेशसुदतीकचसुममकरन्दधारया स्निग्धम् ।
तव पादपद्ममेतत् कदा नु मम मूर्ध्नि भूषणं जननि ॥ २६७ ॥

तव हरपुरंध्रि मातश्चरणपयोजं क्रमार्चितं येन ।
तेनैन्द्रपदमपि द्राग् विराजते तत् समाक्रान्तम् ॥ २६८ ॥

तव पदसरोजपांसुन्यासाद्धन्योत्तमाङ्गलसिताश्च ।
गायन्ति च नृत्यन्ति प्रमोदकृतनुतिचयाश्च राजन्ते ॥ २६९ ॥

यत्प्रणयकलहवार्ताभीतो निरसितसुमेषुरपि विनयी ।
मदनं तमपि वसन्तं मानयितुं संप्रवृत्तहृदयोऽभूत् ॥ २७० ॥

कुसुमैर्गाङ्गैर्वारिभिरनुनयवाग्भिश्च नम्रमुखः ।
सा पुरहरभूषा नो मनसि विहरतां किरीटलसदिन्दुः ॥ २७१ ॥

पुरहरपरतन्त्रं तद् गततन्द्रं वस्तु निस्तुलमुपासे ।
तेनैवाहं धन्यो मद्वंश्या निरसितात्मतापभराः ॥ २७२ ॥

मुखसुषमाजितपद्मं पद्मजहरिवासवादिबुधसेव्यम् ।
काव्यार्थसारमेतद् गौरीरूप हि विजयते तेजः ॥ २७३ ॥

यस्याः पदसरसिजयोर्विबुधकिरीटावलिर्गौर्याः ।
नीराजनविधिकलिता सा मे कुलदैवतं लसतु ॥ २७४ ॥

कविहृत्कैरवविकसनचन्द्रिकया शमिततापभराः ।
मन्दस्मितश्रिया किल यस्याः सा भाति हिमवतः पुत्री ॥ २७५ ॥

निरसिततमःप्रचारा पूर्वा संध्येव नगपतेस्तनया ।
द्विजसंघोदयकलना सा मे कुलदैवतं लसतु ॥ २७६ ॥

रचयामि नमांसि भृशं शंकरमण्डितनिजाङ्कवल्ल्यै ।
पुण्यात्मने पुरारेः पर्वतकुलराजतनयायै ॥ २७७ ॥

पुरमथनभाग्यधाटी कविलोकसमीड्यसूक्तिरसधाटी ।
मुखलसितसारवीटी विहरतु हृदि मे कृपौघपरिपाटी ॥ २७८ ॥

अम्ब तव करुणयाहं रक्षितसंतानवैभवो नित्यम् ।
एतादृशी तु महती कीर्तिस्ते जृम्भते प्रतिदिशं हि ॥ २७९ ॥

मदनपरिपन्थिमहिषी मम मानसकल्पितासना जयति ।
श्रुतिमौलिविहितचरणा योगिहृदम्भोजलालितापि मुहुः ॥ २८० ॥

पशुपतिपुरंध्रि मातस्तव पादयुगं प्रणम्य जन्तुरिह ।
विधुतयमदूतभीतिस्त्रिदिशैरपि मान्यते कलितसेवः ॥ २८१ ॥

सुरसुदतीलोलालकमरन्दरसवासितं तव पदाब्जम् ।
मम मानसे तु फुल्लं भवतु हि काले वयं तु धन्याः स्मः ॥ २८२ ॥

तव नाम यस्य वक्त्रे फाले च पदाब्जकुङ्कुमच्छाया ।
स भवति मान्यस्त्रिदशैरपि धूतसमस्तदुरितजालः सन् ॥ २८३ ॥

आस्तां हि मे पुरस्तात् पुरजयिनः पुण्यपरिमलोल्लासि ।
जननीरूपं संततमाश्रितरक्षैकवल्लप्तदीक्षं तत् ॥ २८४ ॥

हरिणाङ्कमौलिदयिते यदि ते दृष्टिस्तदादरात् कविता ।
आलिङ्ग्य मोदति चिरं तेन हि सर्वज्ञता लोके ॥ २८५ ॥

डम्भादिदुर्गुणौघो धावति दूरे त्वदीयपदभक्तम् ।
त्यक्त्वा यदि ते दृष्टिस्तेन हि सर्वाः श्रियः काले ॥ २८६ ॥

तव मातर्मुनिमान्यं पदमाराध्य प्रसूनौघैः ।
लभते सहस्रनयनान्यथवाष्टौ पुण्यसंवृतः पुरुषः ॥ २८७ ॥

निर्धूततमःकन्दे मुकुन्दपद्मासनादिसेव्यपदे ।
भक्तिर्मम हि सदा स्यात् तेनाहं धन्यचरितोऽस्मि ॥ २८८ ॥

नूपुरमणिक्वाणरञ्जितपादाब्जं मातरम्बिके हृदये ।
मम लसतु तव कटाक्षान्वातः परमर्थनीयं हि ॥ २८९ ॥

मुक्तामणिभूषितया कोकिलशुकमान्यवाग्विभूषितया ।
हिमगिरिसुतयाहं किल सनायको धूतपापादिः ॥ २९० ॥

निर्धूततमसि रूपं तव मातर्मामके हृदये ।
स्फुरति तवैव हि दयया न मामकैः कर्मभिश्च व्रतगुम्भैः ॥ २९१ ॥

निगमान्तवेद्यवैभवमेतत् ते रूपमम्बिके मातः ।
स्फुरति मम नयनयोरिह तत्र तु हेतुस्त्वदीयकरुणा हि ॥ २९२ ॥

त्रिणयनसाम्राज्यमिदं तव रूपं निखिलदेवतोपास्यम् ।
ननु मातः स्फुरतु सदा नातः परमर्थनीयं हि ॥ २९३ ॥

हरिणाङ्कमौल्यर्धीना कापि परा शक्तिरम्बिका क्षेत्रे ।
मौलौ च नित्यवचसां मम चित्ते भजतु नित्यलीलादिम् ॥ २९४ ॥

परिसरनतविबुधालीकिरीटमणिकान्तिवल्लरीविसरैः ।
कृतनीराजनविधि ते मम तु शिरोभूषणं पदसरोजम् ॥ २९५ ॥

भागीरथीव वाणी तव नुतिरूपा विराजते परमा ।
इह मातर्यद्भजनं सर्वेषां सर्वसंपदां हेतुः ॥ २९६ ॥

नगपतितनये मातः शांकरि माहेश्वरीति नामानि ।
नित्यं जपन्नहं तु त्वदीयदासोऽस्मि मुक्तये सिद्धः ॥ २९७ ॥

निखिलचराचररक्षां वितन्वती शांकरी दयया ।
मम कुलदैवतमेषा जयति सदाराध्यमान्यपदकमला ॥ २९८ ॥

सर्वजनैः संसेव्ये संततमपि वाञ्छितप्रदे देवि ।
अम्ब त्वमेव शरणं तेनाहं प्राप्तसर्वकार्यार्थः ॥ २९९ ॥

शांकरि कथं नु वर्ण्यस्तव महिमा वेदमौलिगणवेद्यः ।
इति निश्चित्य पदाब्जं तव वन्दे मोक्षकामोऽहम् ॥ ३०० ॥

त्वामम्ब बालिशोऽहं त्वचमत्कारैर्गिरां गुम्फैः ।
अयथायथक्रमं हि स्तुवन्नपि प्राप्तजन्मसाफल्यः ॥ ३०१ ॥

इति अम्बिकात्रिशती समाप्ता

## १०. अम्बिकास्तुतिः[1]

हनुमत्प्रोक्ता

[अथ कुम्भात् समुत्थाय हनुमान् मारुतात्मजः ।
आर्यां कात्यायनीं भक्त्या तुष्टावेष्टफलप्रदाम् ॥ १ ॥

नमामि खड्गहस्तां त्वां खेटहस्तां भयानकाम् ।
वरदाभयहस्तां च भृत्यलोकभयापहाम् ।
शूलहस्तां शङ्खचक्रगदाचापेषुधारिणीम् ॥ २ ॥

चतुर्भुजामष्टभुजां द्विभुजामरिमर्दिनीम् ।
अष्टादशभुजां नौमि दुर्गां दशभुजामपि ॥ ३ ॥

सहस्रबाहुचरणां सहस्रमुखलोचनाम् ।
सहस्रमकुटाटोपां नौमि विश्वमुखीमुमाम् ॥ ४ ॥

पद्मयोनिमुखाब्जस्थां विष्णुवक्षःस्थलस्थिताम् ।
हरवामाङ्गनिलयां वन्दे मूर्तित्रयात्मिकाम् ॥ ५ ॥

इन्द्रादिसर्वदेवानां सूर्यादिज्योतिषामपि ।
या शक्तिर्दृश्यते चित्रा विष्णुमाया नमामि ताम् ॥ ६ ॥

आर्भट्या(?) वीक्षणैश्चोग्रैः कुलानसुरविद्विषाम् ।
या निर्दहति रक्ताक्षी तां वन्दे सिंहवाहिनीम् ॥ ७ ॥

मधुहन्त्रीं कैटभघ्नीं महिषासुरमर्दिनीम् ।
नौमि दुर्गां भगवतीं हन्त्रीं शुम्भनिशुम्भयोः ॥ ८ ॥]

[1] From the MS. No. 68776 (D. C. No. 145).

अम्ब प्रसीद वरदे भवदुःखहन्त्रि
कामान् ममाशु परिपूरय कामधेनो ।
अद्यैव मे रिपुगणा विलयं प्रयान्तु
वीर्यं जयं च विपुलं च यशः प्रदेहि ॥ १ ॥

अम्ब प्रसीद महतीं श्रियमत्र लोके
सर्वातिगां वितरतादितरानपेक्षाम् ।
संपत्करीं सुखकरीं भवतीमुपास्ते
यस्तस्य दुर्लभमिह त्रिदिवेऽपि नास्ति ॥ २ ॥

अम्ब प्रसीद शतकोटिधरादिदेव-
संभाविताङ्घ्रियुगले सकलेष्टदात्रि ।
यस्मिन् प्रसीदति मनाग् भवती भवानि
धन्यः स एव जगतां च स एव सेव्यः ॥ ३ ॥

अम्ब प्रसीद सकृदम्बुजनाभवक्षः-
क्रीडागृहे कमलवासिनि हेमवर्णे ।
संपत्तिकल्पलतिके त्वदपाङ्गलेशान्
ब्रह्मादयोऽपि परिगृह्य भवन्ति धन्याः ॥ ४ ॥

अम्ब प्रसीद शशिखण्डविभूषणाङ्क-
भागस्थिते भवनिहन्त्रि मनोन्मनि त्वम् ।
या भासि विश्वविलयस्थितिसृष्टिकर्त्री
विश्वंभरा त्रिमहदादिविचित्ररूपा ॥ ५ ॥

अम्ब प्रसीद चतुराननवक्त्रपद्म-
राजीविहारपरिशीलनराजहंसि ।

दृष्टस्त्वया सदयमत्र भवे स मर्त्यो
मूकोऽपि पण्डिततमः स जडोऽपि धीरः ॥ ६ ॥

अम्ब प्रसीद शतमन्युमुखामरात्म-
शक्ते त्वदङ्घ्रिचरणस्य गृहाङ्गणेषु ।
खेलन्ति सुन्दरदृशो विचरन्ति विप्राः
सीदन्ति भूमिपतयोऽवसरप्रतीक्षाः ॥ ७ ॥

अम्ब प्रसीद चतुरङ्गबलावलेप-
दूरीकृतारिनिवहो भवति प्रसादात् ।
दीनोऽप्यनन्यसुलभान् सकलांश्च कामान्
लब्ध्वा चिरं विजयते हि सपुत्रदारः ॥ ८ ॥

अम्ब प्रसीद सहसा मयि पक्षपातात्
कष्टां दशां मम निरीक्ष्य परानपोह्याम् ।
नो चेद् गतिर्जगति नास्ति निरस्तखेदैः
संसेव्यमानचरणाम्बुरुहे मुनीन्द्रैः ॥ ९ ॥

अम्ब प्रसीद झटिति त्वमुपेक्षसे किं
वत्सस्य वाग्विलसनश्रवणाकुला चेत् ।
उत्सङ्गसङ्गिनि शिशौ वचनप्रतीक्षा
स्तन्यं निपीय मुदिते हि सुखाय मातुः ॥ १० ॥

अम्ब प्रसीद दयया त्वरितं भवानि
जानासि चेद्धृदयशल्यमिहाविषह्यम् ।
नो चेत् कथं नु भवती जगतां शरण्या
भूयाच्चिराय भवतापपरिश्रितानाम् ॥ ११ ॥

अम्ब प्रसीद जय शत्रुगणानिमांस्त्व-
मद्यैव देवि परिवर्धय कौतुकं मे ।
कोऽयं विलम्ब इव सा क्व गता दया ते
दीनावनव्रतमिदं च नु किं समाप्तम् ॥ १२ ॥

अम्ब प्रसीद यदि भृत्यविधेयतायाः
साक्षाद्भवानि भवती भवतीह लक्ष्यम् ।
कारुण्यपात्रमिममाकलयत्वजस्रं
धन्यं विधातुमखिलस्य जनस्य मान्यम् ॥ १३ ॥

अम्ब प्रसीद नियतं क्रियतां भवत्या
देवारिवर्गवनपावकतां दधत्या ।
अस्य प्रसादविवशस्य मनःप्रसादः
सर्वात्मना यदगतिर्यदनन्यनाथः ॥ १४ ॥

अम्ब प्रसीद तदनुग्रहसत्वरेण
चित्तेन विग्रहवतेव दयाभरेण ।
आलक्ष्य माममृतशीतलया च दृष्ट्या
क्षिप्रं विधेहि परिलम्बितभूरिभाग्यम् ॥ १५ ॥

अम्ब प्रसीद किमनेन विलम्बितेन
कार्या त्वरात्र निविलम्ब्यमुपेक्षसे हि (?) ।
यद्भागधेयमिह मे सुरलोभनीयं
सर्वात्मना गिरिसुते त्वदधीनमेव ॥ १६ ॥

अम्ब प्रसीद परमेण समाधिना मा-
मेकान्तभक्तिमवधार्य च चण्डिके त्वम् ।

सौभाग्यसंपदभिपूरमहालवाल-
मुद्वेलवेलपरमं कृधि भूरिभाग्यम् ॥ १७ ॥

[इति स्तुवति मारुतौ निहतचण्डमुण्डासुरा
सुरासुरनरोरगाद्यखिललोकधात्री शिवा ।
महामहिषमर्दिनी समवलम्ब्य दिव्यं वपुः
पुरः समभवत् तदा पुरुषमात्रसाम्राज्यदा ॥ १ ॥

अथाह सुप्रसन्ना सा काली कालाम्बुदप्रभा ।
हनूमन्तमुदन्वन्तं तर्जयन्तीव गर्जितैः ॥ २ ॥

हनूमन् स्वागतं तेऽस्तु सुप्रसन्नास्मि सांप्रतम् ।
तवाभ्यागमनं सौम्य चिरायाकाङ्क्षितं मया ॥ ३ ॥

तव स्तोत्रेण तुष्टास्मि विशेषादिष्टदायिना ।
स्तोत्रप्रिया स्तुतिमयी स्तुवतामिष्टसिद्धिदा ॥ ४ ॥

प्रीत्या त्वया कृतमिदं स्तोत्रं पठति यो नरः ।
सर्वार्थसंपदस्तस्य सिध्यन्ति मदनुग्रहात् ॥ ५ ॥

स्तोत्रमेतत् पठेद्यस्तु तस्याहं नित्यदर्शनम् ।
करोमि संनिधौ सत्यं तथाहं तव सुव्रत ॥ ६ ॥

यः पठेदर्थवदिदं तस्य श्रीरचला भवेत् ।
वंशोऽपि वरदाया मे प्रसादाद्यावदस्ति भूः ॥ ७ ॥

नित्यमावर्तयेद्यस्तु स्तुतिमेतां पुरो मम ।
बन्धुभिः सह संगम्य राजते स भवानिव ॥ ८ ॥

पठन्नेतन्महास्तोत्रं भक्तिमान् मयि मानवः ।
सबन्धुः ससुहृल्लोके सर्वत्र विजयी भवेत् ॥ ९ ॥

यः स्तोत्रमेतत् प्रजपेत् सकृद्वासकृदेव वा ।
यं यं चिन्तयते कामं तं तं प्राप्नोत्यसंशयः ॥ १० ॥

राघवस्य प्रसादेन सर्वसिद्धिमतस्तव ।
मया न देयं किमपि तथापीष्टं ददामि ते ॥ ११ ॥]

इति श्रीहनुमद्विरचिता अम्बिकास्तुतिः समाप्ता

---

## ११. दुर्गास्तुतिः[1]

(देवीमाहात्म्यकथासाररूपा)

कल्पान्ते मधुकैटभासुरपराभूतस्य धातुः स्तवैः
प्रीता पङ्कजलोचनस्य नयनान्निर्गत्य निद्रामयी ।
तौ युद्धे परिमोह्य घातितवती तेनैव विश्वेश्वरी
रोद्धुं घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ १ ॥

त्रैलोक्ये महिषासुरप्रमथिते संभूय संचिन्ततां
देवानामपि सा विनिर्मितवपुस्तैर्दत्तभूषायुधा ।

[1] Based on the single MS. No. 75236 (D. C. No. 226). There is neither colophon nor title in the MS. The last verse has a reference to the place Muktinilaya (Mukkola in Kerala).

उच्चैर्नादयुतैर्महासुरबलैरारब्धयुद्धोत्सवा
रोद्धुं घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ २ ॥

निःश्वासप्रभवैश्च भूतनिवहैर्विध्वस्तदैत्योत्करा
हत्वा चिक्षुरमुत्क्षपय्य समरे सिंहेन तं चामरम् ।
आशूदग्रकरालबाष्कलबिडालादीनरीन् क्षिण्वती
रोद्धुं घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ ३ ॥

प्राप्तं क्षोभितविश्वमाशु महिषं संनाशयन्ती ततः
सिंहीभूतमथो नराकृतिमिभाकारं लुलायाकृतिम् ।
आक्रम्याङ्घ्रितलेन निर्गतममुं भूयोऽसिना छिन्दती
रोद्धुं घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ ४ ॥

निःशेषामरशक्तिरूपिणि शिवे माये महाविक्रमे
श्रीवागादिविभूतिरूपिणि रणे विद्युत्कृपानुग्रहे ।
शूलाद्यैरपि पालयेति दिविजैर्नीतादिशन्ती वरं
रोद्धुं घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ ५ ॥

दृप्यच्छुम्भनिशुम्भविक्रमचिरक्लिष्टैः सुरेन्द्रैः स्तुता
पार्वत्या वपुषोऽवतीर्य ललिताकारा हिमाद्रेस्तटे ।
डोलाकेलिविमोहितत्रिभुवना सा चण्डमुण्डेक्षिता
रोद्धुं घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ ६ ॥

चण्डावेदितरूपजातमदनस्तम्भेन शुम्भेन च
द्राग् दूते प्रहिते नियुद्धविजयी भर्ता ममेत्यूचिषी ।
युद्धेच्छुं किल धूम्रलोचनमथो सैन्यान्वितं धून्वती
रोद्धुं घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ ७ ॥

चण्डे मुण्डयुते समेयुषि बलैः कालीमलीकान्तरात्
स्पृष्ट्वा भक्षितसैन्यशस्त्रकुलया तौ घातयन्ती तया ।
प्राप्ते शुम्भबले च केसरितनुः काली रवोद्घोषिणी
रोद्धुं घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ ८ ॥

ब्रह्माण्डादिषु संगतासु शिवदूतीं च स्वशक्तिं तदा
स्पृष्ट्वा तत्प्रहितेन्दुमौलिवचसा दैत्यैः प्रवृत्ते रणे ।
क्रुध्यन्मातृगणार्दितं रिपुबलं दृष्ट्वा प्रहृष्टाशया
रोद्धुं घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ ९ ॥

प्राप्तं संयति रक्तबीजमसुरं मातृप्रहारोद्गल-
द्रक्तोद्भूतभटौघपूर्णभुवनं भीतिप्रदं पश्यताम् ।
काल्या तत्क्षणपीतनष्टरुधिरं शस्त्रोत्करैर्निघ्नती
रोद्धुं घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ १० ॥

घोरे शुम्भनिशुम्भयोरथ रणारम्भे निशुम्भासुरं
खड्गाद्यैः कृतयुद्धमात्तपरशुं संमोह्य बाणोत्करैः ।
शुम्भं शक्तिशरौघभीषणरणं शूलार्दितं तन्वती
रोद्धुं घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ ११ ॥

भूयः प्राप्तनिशुम्भमुक्तमभितश्चक्रायुधं छिन्दती
खड्गाच्छिन्नगदं सशूलमथ तं शूलेन भित्त्वोरसि ।
वक्षोनिर्गतमन्यदस्य च वपुः खड्गेन निष्कृन्तती
रोद्धुं घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ १२ ॥

पञ्चास्येन च मातृभिश्च मथिते सैन्ये समभ्येयुषः
शुम्भस्यान्यबलावलम्बवचसा देवीर्विलाप्य स्वयम् ।

शस्त्रास्त्रोत्करभीषणं चिरतरं तेनाहवं तन्वती
　　रोद्धुं घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ १३ ॥

छिन्नास्त्रेण तलप्रहारमथितेनानेन धृत्वा रुषा
　　व्योमान्तं गमिता नियुद्धमधिकं कृत्वाथ निष्पात्य तम् ।
शूलेन प्रविदार्य सर्वभुवनं निर्व्याकुलं कुर्वती
　　रोद्धुं घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ १४ ॥

आपन्नार्तिहरे प्रसीद शुभदे विश्वेशि नारायणि
　　ब्रह्माण्यादितनो प्रपालय भयाच्छूलादिघण्टादिभिः ।
रोगादीञ्जहि सर्वदायिनि वरं देहीति देवैः स्तुता
　　रोद्धुं घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ १५ ॥

भूयश्चापि तदा तदा रिपुबलं हन्तास्म्यहं चिन्तिता
　　मन्माहात्म्यकथापरानपि सदा सर्वत्र रक्षाम्यहम् ।
तेषां चाभिमतं ददाम्यखिलमित्युक्त्वा ततोऽन्तर्हिता
　　रोद्धुं घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ १६ ॥

माहात्म्यं च सुमेधसानुकथितं श्रुत्वा महीभृद्विशोः
　　सह्याद्रौ विहितत्रिवर्षतपसोः प्रत्यक्षतामेयुषी ।
भूभर्त्रे ददती पुनर्मनुपदं वैश्याय बोधप्रदा
　　रोद्धुं घोरकृतान्तसैन्यमिह मे दुर्गैव दुर्गायताम् ॥ १७ ॥

**श्रीदुर्गास्तुति**पद्यसप्तदशकं नित्यं पठन् मानवो
　　मुक्त्वा मृत्युभयं विहाय विपदं लब्ध्वाखिलं काङ्क्षितम् ।
मुक्तिं चापि लभेत **मुक्तिनिलये** देव्याः कृपागौरवा-
　　न्निःशेषं फलमश्नुवीत गिरिजामाहात्म्यपाठोद्भवम् ॥ १८ ॥

इति श्रीदुर्गास्तुतिः समाप्ता

# १२. देवीनवरत्नमालिका[1]

रामचन्द्रकविकृता

वेलातिशायिललितालापनर्मरतलीलाशुकातिसुभगा
तालाभिरामकुचकूलातिलोलमणिमालाचिरांशुललिता ।
फालातिमुग्धहरिनीला[लका] वृजिनतूलानलात्ममहिमा
कालारिवामदृगवेलां तरङ्गयतु हेलां मदुक्तिसरणेः ॥ १ ॥

भाषामुखत्रिदशयोषाविशेषकविशेषारुणाङ्घ्रिसुषमा
दोषा[करालि]कविभूषा कवीन्द्रकृततोषा कयापि कलया ।
पूषानलेन्दुदृगशेषाम्बिका शमितदोषा स्मृता झटिति या
सैषा तनोतु सुमनीषां निजस्तुतिविशेषा[वधारण]विधौ ॥ २ ॥

द्राक्षासुधेक्षुरसशिक्षाकृदुक्तिरलिकाक्षाङ्कखेलनपरा
वीक्षालवार्पणविलक्षाब्जभूसरसिजाक्षादिदेवनिवहा ।
दक्षा जगत्त्रितयरक्षाविधौ त्रिदशवृक्षायि[ता वितर]णे
मत्क्षामतां हरतु दाक्षायणी झटिति साक्षादुपेत्य कृपया ॥ ३ ॥

वेदाद्यगम्यमृदुपादाब्जरेणुमिलदापन्नभूमुखसुरं
नादात्मकं [~~~मो]दावहं हृदयरोधादियोगविदुषाम् ।
वेदान्तबोधितचिदाकारमात्रमपि (यच्छ्री)धीदायि सर्वजगतां
श्रीदाद्युपास्यमतिसौदामिनीद्युति मदा[द् याति] मामकमनः ॥ ४ ॥

[1] Based on the single MS. No. 67597 (D. C. No. 244: *Devī-stotra*). The MS. has neither colophon nor title but is well written; one end of the leaf is broken resulting in the loss of 3-4 letters in each line. The letters filled up by conjecture are shown in brackets. Since it is an imitation of the *Ambānavaratnamālikā* also known as *Ambāṣṭaka* (see D. C. Nos. 132-5) the above title is tentatively given.

बृन्दारकप्रवरबृन्दातिवृष्टनवमन्दारपुष्पविसरा
वन्दारुमौलितटसंदानितोरुकुरुविन्दातिदीप्तचरणा ।
मन्दाश्च यत्पद[रविन्दार्च]नेन मकरन्दाभवाग्झरयुताः
स्कन्दाम्बिका श्रियममन्दां तनोतु मम कुन्दाभमन्दहसिता ॥ ५ ॥

सोमार्धकल्पितललामा कृपाम्बु[धिरसीमा] हिमाद्रितपसां
भूमा प्रतप्तनवहेमातिशायितनुधामावलिप्तभुवना ।
वैमानिकप्रवरदामामरद्रुसुमदामार्चिताङ्घ्रिनलिना
[श्यामाल]का कलितकामाय मे भवतु कामारिवामनयना ॥ ६ ॥

मुक्तासरप्रकरयुक्ता कुचे किमपि रिक्ता वलग्नविषये
व्यक्तानुरागरससिक्ताशया [श्रुतिनिरु]क्ताङ्घ्रियुग्ममहिमा ।
भक्तार्तिनिर्हरणशक्ता जपाकुसुमरक्ता विविक्तभजना-
सक्तान् करोतु लघु मुक्तान् श्रिया जगति युक्तान् विधाय [⏑ ⏑ –] ॥ ७ ॥

जम्भारिदत्तकरिकुम्भाकृतिप्रचुरडम्भापहस्तनभरां
डिम्भार्कसोदरकुसुम्भांशुकां कनकरम्भासमोरुविभवाम् ।
कुम्भात्मजादिमु[निसंभा]वितां य इह तां भावयत्यतितरां
संभाव्यमानपदगुम्भा वृणोति बत तं भारती सरभसम् ॥ ८ ॥

क्षीराम्बुराशिमणितीरामरद्रुकृत[– रा स]लीलमनिशं
तारा भवाम्बुनिधिपूरादुदञ्चयति वीरान् स्वभक्तिविषये ।
**श्रीरामचन्द्रकवि**गीराविरास यदुदाराङ्घ्रिसंस्तुतिविधौ
स्मेरानना [⏑ ⏑ ⏑ धी]रा जगुर्निगमसारार्थमेव खलु याम् ॥ ९ ॥

---

## १३. पार्वतीस्तोत्रम्[1]

विबुधाधिपतेजिनीशकान्ते वदनाभाजितयामिनीशकान्ते ।
नवकुन्दविराजमानदन्ते नलिनाभं प्रणमाम्यहं पदं ते ॥ १ ॥

विकचाम्बुरुहां विलासचोरैरतिशीतैः प्रवहद्दयाम्बुपूरैः ।
शशिशेखरचित्तनृत्तरङ्गैस्तरसालोकय देवि मामपाङ्गैः ॥ २ ॥

अवनीधरनायकस्य कन्ये कृपणं मां परिपालयातिधन्ये ।
विधिमाधववासवादिमान्ये द्रुतमुन्मूलितभक्तलोकदैन्ये ॥ ३ ॥

कुचनिन्दितशातकुम्भशैले मणिकाञ्चीवलयोल्लसद्दुकूले ।
परिपालय मां भवानि बाले त्रिजगद्रक्षणजागरूकलीले ॥ ४ ॥

स्वरुचा जिततप्तशातकुम्भे कचशोभाजितकालमेघडम्भे ।
परिपालय मां त्रसन्निशुम्भे मकुटोल्लासिसुधामयूखडिम्भे ॥ ५ ॥

कुसुमायुधजीवनाक्षिकोणे परितो मामव पद्मरागशोणे ।
स्मरवैरिवशीकृतप्रवीणे चरणाब्जानतसत्क्रियाधुरीणे ॥ ६ ॥

गिरिजे गगनोपमावलग्ने गिरितुङ्गस्तनगौरवेण भुग्ने ।
वस मे हृदये तवाङ्गलग्ने तव संदर्शनमोदसिन्धुमग्ने ॥ ७ ॥

सकलोपनिषत्सरोजवाटीकलहंस्यास्तव मे कवित्वधाटी ।
कृपयाविरभूदियं तु पेटी वहतु त्वद्गुणरम्यरत्नकोटीः ॥ ८ ॥

[इति श्रीपार्वतीस्तोत्रं संपूर्णम् ][2]

---

[1] Based on the single MS. No. 74062 (D. C. No. 275).
[2] This colophon is not found in the MS.

## १४. बृहदम्बार्याशतकम्[1]

**श्रीगोकर्ण**निकेता श्रीविद्यादिव्यशुक्तिकामुक्ता ।
श्रीकण्ठनित्यमिलिता श्रीचक्रेशी पुरोऽस्तु मे माता ॥ १ ॥

कल्याणं कलयेन्नः कल्यानस्मान् करोतु शतमब्दान् ।
कल्यातङ्कमपास्येत् कल्याणी नः सदैव बृहदम्बा ॥ २ ॥

तरुणारुणप्रकाशं तरुणा **वकुलेन** भासुरनिवेशम् ।
गुरुणा स्तनेन नमितं गुरुणा सदयेन वस्तु नः कथितम् ॥ ३ ॥

वकुलद्रुमूलसदनां वनजसहाध्यायिपरिलसद्वदनाम् ।
वल्गुस्मितेक्ष्यरदनां वन्दे द्दक्तर्जिताम्बुजच्छदनाम् ॥ ४ ॥

एका द्विलोकसुखदा त्र्यक्षर्याख्यापिता चतुःपीठा ।
पञ्चाम्नायशिरःस्था बृहदम्ब त्वं षडध्वजनयित्री ॥ ५ ॥

नासाभासा चम्पकशोभाक्षोभावहास्तु बृहदम्बा ।
पारावारात्मजया सेव्या देव्या गिरां च भव्याय ॥ ६ ॥

कम्बुलसत्कंधरया कैश्यविनिर्धूतनीलकंधरया ।
पाल्ये शोणाधरया पावितवकुलद्रुमूलसद्धरया ॥ ७ ॥

पीनस्तनावनम्रे पादनताम्भोजवासिनीकम्रे ।
वाणीजितसरसाम्रे वाचो वल्गन्तु धाम्नि मे ताम्रे ॥ ८ ॥

[1] Based on the MS. No. 73248 (D. C. No. 284). This is on the Goddess Bṛhadambā at the temple of Gokarṇeśvara near Pudukkottai, also referred to as Gokarṇa or Tirugokarnam (cf. *Gokarṇeśvaramānasikārādhana* below).

वकुलवनीवासिन्या विद्रुमसच्छायचेलवासिन्या ।
हृद्राजीवासिन्या हृदयं शंभोर्हृतं सुवासिन्या ॥ ९ ॥

वन्दे श्रीबृहदम्बां वल्गुगतापास्तराजकादम्बाम् ।
आश्रितजनावलम्बामासेवे कैश्यधूतलोलम्बाम् ॥ १० ॥

केसरसरभासुरया केवलदासीभवत्सुरासुरया ।
कलिता वाणी सुरया कयापि मे भक्तिनम्रभूसुरया ॥ ११ ॥

शिरसा धृतसोमायाः श्रीगोकर्णैकदिव्यधामायाः ।
पदनम्राणां मायाः पापविधात्र्यः कदापि नोमायाः ॥ १२ ॥

आनन्दसारसीमामानङ्गोत्कर्षपोषकापाङ्गाम् ।
आनन्तुं बृहदम्बामानन्त्यं मूर्ध्नि वाञ्छामि ॥ १३ ॥

वकुलाटवीनिविष्टां वन्दकसंरक्षणात्यभिनिविष्टाम् ।
निरवधिकरुणाविष्टां नित्यं सेवेमहीष्टशिपिविष्टाम् ॥ १४ ॥

अभिध्यायितहृल्लेखामतीतविद्वत्सुकविजनोल्लेखाम् ।
पदपद्मनमल्लेखां पश्यामः शाश्वतीं तटिल्लेखाम् ॥ १५ ॥

करुणामृतवर्षिण्याः सेवकसर्वापराधमर्षिण्याः ।
वकुलविपिनहर्षिण्या वश्याः सः शंभुचित्तकर्षिण्याः ॥ १६ ॥

करुणाझरसरसाक्षीमरुणाधरशोभिसुन्दरसुहासाम् ।
तरुणार्धघटितदेहां वरुणालयजेडितां शिवां वृणुमः ॥ १७ ॥

धन्याः के नु मदन्या वलयेऽवन्या यतो वकुलवन्याः ।
मूले मोक्षवदान्या मान्या कन्या गिरेर्हिमान्या मे ॥ १८ ॥

केचित् त्वां कुलमूले साक्षात्कुर्वन्त्यहं वकुलमूले ।
अर्धेश्वरां कतिपये मातः सर्वेश्वरामहं कलये ॥ १९ ॥

वाञ्छितसिद्ध्यै भविता लाञ्छितचिकुरा चकोरवृत्तिकृता ।
काङ्क्षितचरणा सद्भिः कां क्षिप्रं नातनोति संसिद्धिम् ॥ २० ॥

अरुणिमसारसमष्टिः संसृतिकूपोत्तरणयष्टिः ।
कलितामृतौघवृष्टिर्बृहदम्बा भातु मे कृपादृष्टिः ॥ २१ ॥

सामजसमानगमना सामसमाजोपगानतुष्टमनाः ।
समजानुपेतचरणा समरसतापन्नपन्नगाभरणा ॥ २२ ॥

विश्वपतिदश्यहृदया नश्वरविश्वासपश्वनाशास्या ।
अश्वमुखस्तवशस्या निःश्वसितानुश्रवास्ति बृहदम्बा ॥ २३ ॥

लघु तव चरणं शरणं तरणं मृत्योर्भजामि बृहदम्ब ।
यावत् तरसा जरसा परसादङ्गानि न कृतानि ॥ २४ ॥

प्रभवति यत्र न गौर्वा नोर्मीणां संकथा न वा जडता ।
कोऽपि वकुलालवाले जयति चिरानन्दसागरोऽपार ॥ २५ ॥

स्थावरराजतनूजा भावरसस्फीतवैखरी जननी ।
पीवरवक्षोजनता धीवरदौहित्रसूक्तिपरिचिन्त्या ॥ २६ ॥

सर्वानन्दनिवासा शक्रशतानन्दमुख्यसुरसेव्या ।
धृतनन्दसूनुदेहा भूमनिजानन्दमेदुरा जयति ॥ २७ ॥

अपहृत्य चित्तशल्यं भक्तिमतामातनोषि कैवल्यम् ।
बृहदम्ब को न्वकल्यं भजेत देवान्तरं त्वया पाल्यम् ॥ २८ ॥

भवनीकृतगोकर्णं भास्वन्मणिकुण्डलस्फुरत्कर्णम् ।
ध्यायामि शोणवर्णं धाम परं भक्तमानसाभ्यर्णम् ॥ २९ ॥

कलिता ललिता कलितापहरा दहरान्तरविचिन्त्या ।
वकुले मुकुलेऽप्यकुले सदयाभ्युदया किमन्यदेवैर्मे ॥ ३० ॥

वाराणसीनिषेवा वाराश्यवगाहनानि च न तन्याः ।
वारान् बहूनथाङ्घ्र्योर्वारा पूयस्व वकुलमूलेश्याः ॥ ३१ ॥

श्रेयश्च या विधत्ते श्रीबृहदम्बापदाम्बुरुहचिन्ता ।
कलिकलुषाणि विभिन्ते मदमपि कार्तान्तमाहन्ता ॥ ३२ ॥

नीवी नवान्यवचसां सा वीणा वाण्यभिपणार्या ।
भावी भवार्तिहरणी देवी दयतां सदैव बृहदम्बा ॥ ३३ ॥

माता सारसनेत्रा मान्या वाराशिकन्यकानेत्रा ।
मृगचक्रवर्तिपत्रा मनसि मम स्तात् स्तनोल्लसत्पत्रा ॥ ३४ ॥

वेलातिगानुकम्पा वकुलवनाम्भोदमञ्जुतरशम्पा ।
भवतसामृतझम्पा भवतु हृदिस्था कृतद्विषत्कम्पा ॥ ३५ ॥

पद्यायामाद् यायामाद्यायामम्ब तावकजनानाम् ।
विद्यां ते निरवद्यां विद्यां गोकर्णराज्ञि दयया ते ॥ ३६ ॥

तरणिं तमश्छटानामरणिं ज्ञानानलस्य कलयामि ।
तरणिं भवाम्बुराशेः सरणिं वेद्यागमस्य बृहदम्बाम् ॥ ३७ ॥

वक्षोजभारनमिता लक्षोत्तरवेदगीःप्रमिता ।
इक्षोर्मधुरोक्तिमिता न क्षोभ्या त्वं दयाधुनी स्तिमिता ॥ ३८ ॥

हृदयं पुराणवचसां सदयं दीनावने परं तेजः ।
मदयन्नधरं शंभोस्तदयं यातो जनः शरणम् ॥ ३९ ॥

माङ्कणतीरकुटीरा मेदुरवक्षोजलिप्तपाटीरा ।
पतिधृतचन्द्राण्डीरा ध्येयाम्बा मुक्तिदानशौण्डीरा ॥ ४० ॥

आपन्नरक्षणार्थे चापं पुण्ड्रेक्षुमादधाना सा ।
रोपं च पौष्पमम्बा पापं प्रोत्सारयेन्ममाशेषम् ॥ ४१ ॥

दक्षा निरर्गला सा दातुं स्वर्गं त्रिवर्गमपवर्गम् ।
बृहदम्बा महदन्तर्वासा भासारुणा जयति ॥ ४२ ॥

वारिदसोदरचिकुरां वदनपराभूतविस्फुरन्मुकुराम् ।
सुन्दरहासाङ्कूरां सेवेऽम्बां वाग्जितामृतासाराम् ॥ ४३ ॥

बिन्दुत्रयात्मकतया कलयन्ति त्वामपारकरुणाब्धिम् ।
ये बृहदम्ब भवाब्धिर्विदुषां तेषां कति पृषन्ति ॥ ४४ ॥

नीवारशूकशाता नीहारांशुच्छटाशीता ।
बालादित्यशताभा मूलाधारात् समुद्यता भासि ॥ ४५ ॥

विश्वप्रथानिदानं वेदशिरःस्फूर्जदपदानम् ।
बृहदम्बिकाभिधानं बहुशः सेवेय मङ्गलविधानम् ॥ ४६ ॥

आलोलनीलवेणी फालोत्सङ्गानुषङ्गिदिव्यमणी ।
कालोन्मिषत्कुवलयच्छायादायादलोचनद्वितया ॥ ४७ ॥

मणिताटङ्कसमुद्यद्घृणिगणनीराजितकपोलम् ।
नासाग्रलम्बिमुक्ताभासा संपृक्तमन्दहासरुचिः ॥ ४८ ॥

अरुणाधरजितबिम्बा वक्त्रपराभूतशीतकरबिम्बा ।
पीनोन्नतस्तनभरा पाशसृणीष्विक्षुचापकरा ॥ ४९ ॥

शिञ्जितमञ्जीरलसन्मञ्जुलचरणाब्जनम्रसुरलोका ।
बृहदम्बा मम हृदये निवसतु वात्सल्यशीतलालोका ॥ ५० ॥

मानव्या या नव्या मानव्याघातभीतया दीप्त्या ।
आतन्वीत सुतन्वी सा तन्वीड्या श्रियं तवाम्ब तनूः ॥ ५१ ॥

इच्छात्तविश्वशिल्पां पञ्चब्रह्मप्रकल्पितसुतल्पाम् ।
वन्दीकृतादिजल्पां वन्दे देवीं दयोदयानल्पाम् ॥ ५२ ॥

केचिन्मदालसाक्षं कालोन्मीलत्कुवालजयदक्षम् ।
गात्रं तवापरोक्षं कुर्युर्बृहदम्ब दुष्कृतविपक्षम् ॥ ५३ ॥

शयधृतचारुविपञ्ची श्रोणीबिम्बावलम्बिमणिकाञ्ची ।
गोकर्णेऽश्यघवञ्ची दृष्टा चेत् को न भक्तिरोमाञ्ची ॥ ५४ ॥

कालं प्रयाप्य मेऽलं भारैर्दुःस्थैरचारुकुचभारैः ।
क्षामैरशुकश्यामैरन्यैर्देवैरधूतनतदैन्यैः ॥ ५५ ॥

सोमार्धसल्ललामा सा मामव्यात् सुवकुलवनदामा ।
कामारिदिव्यरामा परमा संविद् घनश्यामा ॥ ५६ ॥

कोमलवाकुलमूला स्तोमलसत्कुन्तलाधिगोकर्णम् ।
यामलवर्ण्या कापि श्यामलवर्णा विभाति गुरुमूर्तिः ॥ ५७ ॥

प्रवहत्करुणापाङ्गं प्रत्यग्राम्भोदमेचकश्यामम् ।
विश्वाधिकान्तरङ्गं वकुलवने भाति पालितापाङ्गम् ॥ ५८ ॥

शिखिपिञ्छं तापिञ्छं सभयं धम्मिल्लशोभया स्वभया ।
आदधती दधतीन्दुं माङ्कणरोधोऽङ्कणे जयत्यम्बा ॥ ५९ ॥

वामकुचचुम्बिवीणामर्धोन्मीलन्मनोज्ञदृक्कोणाम् ।
विश्वावनप्रवीणां वकुलाटव्यां नमामि रममाणाम् ॥ ६० ॥

अंसानुषङ्गिचूली संसारापारवारिधेराली ।
शं सा ददातु काली कंसारीड्या सदात्तवकुलाली ॥ ६१ ॥

वीणावादिनि शर्मास्वादिनि कर्माद्रिभेदिनि स्यान्मे ।
विश्वाकारिणि चन्द्रालंकारिणि बोधकारिणि प्रेम ॥ ६२ ॥

अरुणांशुकामुपासे निगमं शुकरूपिणं दधतीम् ।
ददतीमाशुकवित्वं स्वांशुकदर्थीकृतातसीं जननीम् ॥ ६३ ॥

सज्जनकृतवरिवस्यं सारसपरिहाससादरनिजास्यम् ।
गान्धर्वस्य रहस्यं किंचन कुर्यान्मदाशास्यम् ॥ ६४ ॥

दूर्वाश्यामलकाये दुर्वासोमुख्यमौनिगणसेव्ये ।
अर्वास्यवर्णितगुणे कुर्वाशापूर्तिमद्य बृहदम्ब ॥ ६५ ॥

लीलालोला वकुलाटव्यामव्याच्छुकाभिरामकरा ।
वीणाक्वाणाभिरता माता भूताधिपस्य दयिता नः ॥ ६६ ॥

दुरितेभ्यो न कृतेभ्यो नापि कृतान्ताद् बिभेमि दुर्दान्तात् ।
दृष्टा दयासमष्टिर्वकुलवने श्यामलाकृतिर्येन ॥ ६७ ॥

धन्योऽहं धन्योऽहं वंशद्वितयी मदीक्षिता धन्या ।
परिपणमाम्नायानां श्यामलमालोकि वकुलमूले यत् ॥ ६८ ॥

वित्तादिभिर्नराणां मत्तानां दुर्लभा विना भक्तिम् ।
तत्तादृशानुभावा सत्ता काचिद् विभाति गोकर्णे ॥ ६९ ॥

परिहृतसर्वविकल्पा परिधृतशीतांशुकोरकाकल्पा ।
बालदिवाकरकल्पा बृहदम्बा पातु सत्यसंकल्पा ॥ ७० ॥

चम्पकनीपरसालाः सन्त्येवान्ये रसास्थले सालाः ।
वकुले तु मेऽस्ति भक्तिर्यस्मिन् दृष्टे स्मृता भवत्यम्बा ॥ ७१ ॥

भ्रमरीविभ्रमकबरीं भ्रूभ्रमणेनैव पञ्चकृत्यकरीम् ।
संवित्सुखामृतझरीं संसेवेऽम्बां भवाम्बुराशितरीम् ॥ ७२ ॥

कुमुदेशपाकचूडं कलितसुरोद्यानमालिकापीडम् ।
अञ्चितवकुलाक्रीडं किंचिदुपासे दयानिवहनीडम् ॥ ७३ ॥

सरले सरले विरले तरले हृन्नेत्रकुचसीम्नि ।
वस्तुनि मेऽस्तु निवास्तुनि करुणायाश्चित्तवृत्तिरपतन्द्रा ॥ ७४ ॥

कं गणयेऽन्यमुपास्यं **मङ्कण**कासारतीरकौतुकिनः ।
अङ्गणवाकुलसुमनोरिङ्खणसौरभ्यनिर्भराद्धाम्नः ॥ ७५ ॥

वेशन्ततुल्यनाभी वासन्तस्फारपुष्पशुभ्रवेणी ।
सीमन्तभासिघुसृणा सा हन्त प्रेक्षिताद्य बृहदम्बा ॥ ७६ ॥

श्रुतिलासिकालिरङ्गायितस्वमहिमाक्षिनिर्जितकुरङ्गा ।
प्रोद्यत्कृपातरङ्गा पायादम्बा मृगेश्वरतुरङ्गा ॥ ७७ ॥

निबिडघनस्तनकुम्भा निजवेणीन्यस्तशीतकरडिम्भा ।
निवसितवरकौसुम्भा निवसतु चित्ते जगद्धितारम्भा ॥ ७८ ॥

6

गम्भीरनाभिकुहरां कुम्भीन्द्रस्पर्धिमुग्धसंचाराम् ।
तां भीमस्य न भामां कुम्भीपाकेच्छवो भजन्त्यज्ञाः ॥ ७९ ॥

वाद्यापि नो पुराण्या तत्त्वविपण्या यदुच्चतागण्या ।
सा वर्ण्यास्तु शरण्या कस्य धरण्यामुमाखिलवरेण्या ॥ ८० ॥

गोकर्णेशयसेव्यां गोकर्णेशप्रियां प्रणमन् ।
गोकर्णे वस तूष्णीं गोकर्णे भ्रामकांस्तु जप मन्त्रान् ॥ ८१ ॥

क्षुद्रार्थदानशीला न द्रागाराधिताः प्रसीदन्ति ।
निद्रालसास्त्वदन्ये तद्राज्ञि त्वां भजे वकुलवन्याः ॥ ८२ ॥

आगमकोटिनिरुक्तामाब्रह्मस्तम्बरक्षणासक्ताम् ।
आर्यामनादिमुक्तामालोके केसराटवीसक्ताम् ॥ ८३ ॥

सेवे किंचन दिव्यं भावे तेजः समस्तसंसेव्यम् ।
धीवेदिमेत्य हृद्यं संवेद्याख्यं दहेन्ममाभव्यम् ॥ ८४ ॥

वाणी चाम्बुधिकन्या सा वृणुते तं बलादिवानन्या ।
किंचित् त्वया जनन्या कटाक्षितो यः कियत्यथ स्त्र्यन्या ॥ ८५ ॥

शक्तः कोऽपि यदीयां लङ्घितुमाज्ञां न लोकेषु ।
यस्याज्ञां बृहदम्बा साध्यास्ते कस्ततो ह्यधिकः ॥ ८६ ॥

अष्टापदादि सर्वं लोष्टाभिन्नं सदाभिपश्यन्तः ।
अष्टात्मनः प्रणयिनीं शिष्टाः पश्यन्त्यनन्यतया ॥ ८७ ॥

दाहं भवानलोत्थं व्याहन्तुं वाकुलाटवीं देवीम् ।
सोऽहं भजामि भक्त्या याहंतारूपिणीति गुरुणोक्ता ॥ ८८ ॥

कुलदैवतं मदीयं कुलकुण्डाभ्यन्तरैकवास्तव्यम् ।
कुलपर्वतेशभाग्यं कुलायमीक्षेऽनुपाधिकरुणायाः ॥ ८९ ॥

अग्नाविष्णुमुखेड्या भग्नाशेषार्तिरात्मभक्तानाम् ।
भुग्नालका मदीये लग्ना चित्ते चकास्तु बृहदम्बा ॥ ९० ॥

अव्याजभूतकरुणा भव्यापाङ्गप्रकल्पितत्राणा ।
अव्याद्विलिप्तघुसृणा स्तव्या श्रुत्या सदाप्तगोकर्णा ॥ ९१ ॥

अम्भोजतुल्यनयनामङ्कालंकारिणीं त्रिनेत्रस्य ।
अङ्गीकृतादिमरसामम्बां गोकर्णनायिकां सेवे ॥ ९२ ॥

भार्यामनादियूनोऽहार्याधीशान्ववायमणिभूषाम् ।
आर्यामुपाध्वमनिशं कार्याकार्यविमर्शनिष्णाताः ॥ ९३ ॥

वरदे सुरदेशिकवाङ्निकरासुकरानुवर्णने धाम्नि ।
करवै मुरवैरिमुखैः शिरसा सुरसार्थकैर्नते चेतः ॥ ९४ ॥

**मङ्कण**कासारझरीसमीरधारामनोहरोदारे ।
मिलदलिलोलन्मुकुले वकुलवने लालसीति सकलेशी ॥ ९५ ॥

पश्यल्ललाटदारान् परिपूर्णानन्दसंविदाकारान् ।
कठिनघनस्तनभारान् कलये गोकर्णपावनागारान् ॥ ९६ ॥

गोकर्णेशमहिष्या व्याकर्तुं को गुणान् भवेदीशः ।
स्वीकर्तुं हृदि वा तान् श्रीकर्कास्यं तमेकमपहाय ॥ ९७ ॥

तुष्टा श्रीबृहदम्बा कष्टानुन्मूलयेत् कृपादृष्ट्या ।
इष्टानि च प्रदद्यान्मृष्टां प्रतिभां परत्र च श्रेयः ॥ ९८ ॥

वन्दे विश्वविधात्रीं वन्दे विद्याविमुक्तिफलदात्रीम् ।
वन्दे वकुलवनेशीं वन्दे गोकर्णवल्लभसुकेशीम् ॥ ९९ ॥

जयति स्फारदयार्द्रा **गोकर्णाधीश**वल्लभा जयति ।
जयति प्रसादसुमुखी **श्रीरघुनाथेन्द्र**पूजिता जयति ॥ १०० ॥

आख्यां सकृद् यदीयामाख्यायाशेषवाञ्छितं लभते ।
तस्याः स्तुतिप्रियाया यः स्यात् स्तोत्रं पठन् स पूर्णार्थः ॥ १०१ ॥

इति श्रीबृहदम्बाशतकं संपूर्णम्

---

## १५. महाषोडशीवर्णरत्नावलिस्तोत्रम्[1]

ह्रींकाराङ्कणदीपिकां श्रितजनानन्दप्रदां श्रीमतीं
श्रीनाथाद्यमरार्चिताङ्घ्रिकमलां श्रीसुन्दरीं भावये ।
श्रीमन्मञ्जुलरत्नसानुविलसन्मध्यस्थकूटाग्रग-
श्रीमन्नागरमध्यलासिसुमहच्छ्रीचक्रबिन्दौ स्थिताम् ॥ १ ॥

ह्रींकारामृतसिन्धुकौस्तुभमणिं ह्रींकारमध्यस्थितां
ह्रींकारोन्नतरत्नसौधवलभीसंलासिपारावतीम् ।
ह्रींकारामरपादपाग्रविहरत्संहृष्टकेकीं भजे
ह्रींकाराम्बुदचञ्चलां हृदि गतां ह्रींकारवर्णात्मिकाम् ॥ २ ॥

[1] Based on the MS. No. VB 27.

क्लींकाराम्बुजपत्रभास्करनिभां क्लींकारचन्द्रप्रभां
क्लींकाराग्निशिखां भजामि सततं क्लींकारपेटीमणिम् ।
क्लींकारोपवनान्यपुष्टगृहिणीं क्लींकारवेद्यात्मिकां
क्लींकाराब्जहरप्रियां परतरां क्लींकारवर्णात्मिकाम् ॥ ३ ॥

ऐं ऐमित्यनुचिन्तकाच्छहृदयाम्भोजाटवीहंसिका
ईशित्वादिविभूतिसंवृतमहारत्नासने संस्थिता ।
ऐश्वर्याय भवत्वखण्डविभवा याम्बा सदा मे गृहे
चेशाद्यर्चितपादपङ्कजयुगा चैशाङ्कमञ्चस्थिता ॥ ४ ॥

सौन्दर्यद्रुममञ्जरी भगवती सौवर्णवर्णावता-
न्मां संसारमहाभयाद् द्रुततरं सौवर्णकुम्भस्तनी ।
सूर्याब्जारिकृशानुदृक् शशिकलोत्तंसा सदानन्ददा
सौभाग्यं दिशतादथ प्रथितमप्यव्याहतं भूरि मे ॥ ५ ॥

ओंकारार्थनिरूपणैकमनसा चोंकारनादात्मना
श्रीदेव्या मम चित्तभित्तिरधुना चित्रायते चोज्ज्वला ।
ओजोभिर्जगदेतदद्य विपुलं यस्यास्तयाब्जप्रभै-
रोतप्रोतमभूत् कुसुम्भकुरुविन्दाब्जप्रभायाः सदा ॥ ६ ॥

ह्रींकारागममस्तकं हृदि कदा भायाद् वपुस्ते परं
ह्रींकाराब्धिसुधामयं हृतजपाशोणं हितप्रापकम् ।
ह्रींकाराद्रिगुहाहरीन्द्रशिशुकं ह्रींकारकन्दाङ्कुरं
ह्रींकाराम्बुजसौरभं हृतजगज्जालं जगन्नायिके ॥ ७ ॥

ह्रींकाराध्वरदक्षिणे जननि ते पादाब्जयुग्मे सदा
भक्तिं मे जनयाशु देवि कृपया श्रीदेवि तारायिते ।

श्रीमन्मञ्जुलरत्ननिर्मितमहामञ्जीरभूषोज्ज्वले
श्रीशृङ्गाररसालये श्रितजगत्स्वान्ताब्जिनीहंसिके ॥ ८ ॥

कल्याणं वितनोतु काममनिशं कामारिवामाङ्कगा
कस्तूरीघनसाररूषितकुचाग्रालम्बिमुक्तालता ।
कामाकर्षणदिव्यपाशसुभगा कान्त्यार्ककोटिप्रभा
कल्याणी कमलेक्षणा कलिमलप्रध्वंसिनी कामदा ॥ ९ ॥

एतावन्मम देवि ते पदयुगे भक्तिर्दृढा भूयसी
स्यान्नेत्रं च जपाप्रसूनरुचिरायास्त्वत्तनोर्वीक्षणे ।
आनन्दाश्रुपरिप्लुते वचनमप्यम्ब स्तवे गद्गदं
चेतस्त्वन्मयमम्ब पश्यतु जगत् त्वन्मूर्तिभासारुणम् ॥ १० ॥

ईशानादिपदाञ्चिते शिवमये मञ्चे परेशाङ्कगा-
मीशित्वाद्यखिलाष्टभूतिमनिशं दात्रीं स्वभक्ताय मे ।
चापं चैक्षवमाशुगं सुममयं क्रोधात्मकं चाङ्कुशं
पाशं रागतनुं प्रणौमि दधतीं श्रीमन्महासुन्दरीम् ॥ ११ ॥

लक्ष्मीं चक्रनिवासिनीं ललितसंगीतप्रियां लाकिनीं
लब्धैश्वर्यसमुन्नतिं लयकरीं लास्यप्रियामाश्रये ।
लङ्कानायकवैरिपूजितपदां लावण्यवारांनिधिं
लक्ष्मीपूजितपादपद्मयुगलां मोक्षाख्यलक्ष्म्यै सदा ॥ १२ ॥

ह्रींकारार्णसुधां च हृद्यममरैरीड्यं महत् ते वपुः
प्रालेयांशुकलाविलासिमकुटं ह्रींकारनादात्मकम् ।
ये ध्यायन्ति हृदम्बुजे प्रतिदिनं तेषामनङ्गज्वर-
क्रान्ताः स्युर्वशमागतास्त्वनुकलं वध्वः सुराणां प्रिया: ॥ १३ ॥

हन्तास्थां मितवैभवेषु हरिमुख्येष्वेव मूढा जना
भक्तिं पामरदैवतेषु विवशाः कुर्वन्ति मोहादिह ।
त्यक्त्वा त्वां परदेवतां हरिहरब्रह्मादिभिः सेवितां
सर्वैश्वर्यमहोदयां खरमिमे संत्यज्य धेनुं श्रिताः ॥ १४ ॥

सर्वज्ञत्वमवाप्य संसदि सतां शास्त्रेषु पाण्डित्यम-
प्यम्बायाः पदपद्मसंस्मृतिवशान्मूकोऽपि वाग्मी भवेत् ।
यस्यास्तच्चरणाम्बुजं हरिहरब्रह्मादिभिर्वन्दितं
मूढाश्चिन्तयताशु वोऽपि तरसा दद्यात् कवित्वं श्रियः ॥ १५ ॥

कल्याण्यम्ब कदम्बकाननगृहे कल्पद्रुमैः काङ्क्षिता-
दर्थादर्थसमर्पणेऽधिकतरे कारुण्यकल्लोलिभिः ।
कर्णान्तायतलोचनाञ्चलगतैर्वीक्ष्याद्य मामातुरं
रक्षाशु त्रिपुरे परात्परतरे श्रीकामसंजीविनि ॥ १६ ॥

हस्त्युत्तुङ्गपृथूरुकुम्भकुचयोर्विन्यस्तहारेण ता-
मारक्तांशुकमाल्यभूषणवरैरुद्दीप्यमानामुमाम् ।
हाहाहूहुमुखस्तुतामनुदिनं हैयंगवीनान्तरा-
मम्बामादिमवाक्स्तुतामहमलं ध्यायाम्यभीष्टाप्तये ॥ १७ ॥

लब्धज्ञानसुधाकरेण मनसा लक्ष्यीकृतं ते वपुः
सद्भिः संततमम्बुजाक्षि ललिते लग्नं भवत्वान्तरे ।
लावण्योज्ज्वलदिव्यगात्रि विमले लाक्षारसालंकृतं
श्रीमत्पादपयोजयुग्ममधुना मन्मूर्ध्नि निक्षिप्यताम् ॥ १८ ॥

ह्रींकाराब्धिसुधे ह्रिया विरहिते ह्रींकारमन्त्रार्थदे
ह्रींकारप्रियशारिके मयि कृपां ह्रींकारनादोदये ।

ह्रींकारमलदर्पणप्रतिकृते ह्रींकारवेद्ये शिवे
दीने मय्यधुना कुरुष्व दयया ह्रींकारदीपप्रभे ॥ १९ ॥

संपत्कर्मणि दीक्षितानि सकलापद्भञ्जनान्यम्ब ते
मामेवाकलयन्तु पङ्कजदलाक्षेमंकराण्यादरात् ।
ब्रह्मादीन् पदपद्मलग्नमकुटान् हित्वा कथंचिच्छिवे
नेत्राण्यद्य कृपासुधारसझरीसिक्तानि हे सुन्दरि ॥ २० ॥

कल्पान्ते हृतसर्वलोकजठरस्यानन्दनाढ्यं मुदा
कर्तुर्यन्मणिकुण्डलीयुगलिका दीपायते संततम् ।
ब्रह्मोपेन्द्रमुखामरे विरमति ब्रह्माण्डभाण्डे परं
सा पाशाङ्कुशपुष्पसायकधनुर्विद्योततान्मे हृदि ॥ २१ ॥

लक्ष्यं किंच भवेन्महात्रिपुरसुन्दर्यागमान्तैर्नुते
मां लक्ष्यीकुरु वीक्षणाशुगततेस्त्वामेव सर्वात्मना ।
ध्यात्वा चेतसि संस्थितं जगदिदं त्वद्रूपमार्ये सदा
ज्ञात्वानन्यहृदा विहाय भजनं नश्यत्सु देवेष्विह ॥ २२ ॥

ह्रींकारस्मरणेन देवि तरसा ह्रीमान् सुधीमान् भवेत्
ते मूकोऽपि जडोऽपि पद्मजनुषा सापत्निकोऽभूद् भृशम् ।
आश्लिष्याम्बुधिकन्यकां विलसति श्रीमन्त्रराजाक्षरं
तन्मय्यादिश देवदेवि कृपया धन्योऽस्म्यहं तेन च ॥ २३ ॥

सौवर्णोज्ज्वलमण्डपे मरतकप्राकारभित्तौ बृह-
न्नानारत्नमयासने शिवमये श्रीकामराजाङ्कके ।
तिष्ठन्तीं कुरुविन्दबृन्दरुचिरां माणिक्यभूषोज्ज्वलां
धन्यास्ते भुवि चिन्तयन्ति मनसा ये श्रीमहासुन्दरीम् ॥ २४ ॥

ऐंकाराम्बुजकर्णिकोज्ज्वलमहद्रत्नासने संस्थितां
सिञ्चन्तीममृतद्रवैः शशिशिलास्पष्टामिरामप्रभाम् ।
तेजोभिर्जगदम्ब ये भुवि भजन्त्यापीनतुङ्गस्तनीं
तेषामाननपङ्कजे निवसते वाणी सुधास्यन्दिनी ॥ २५ ॥

क्लींमित्यक्षरमेकमेव मनसा ध्यायन्ति ये मानवाः
कंदर्पायुततुल्यसुन्दरतरश्रीमूर्तयः शैथिलम् ।
कुर्वन्ति स्म रतेश्च नैजवपुषा ते पातिव्रत्यं सह
स्पर्धन्ते हृतवाग्रमाः कमलनाभाब्जासनाभ्यां सदा ॥ २६ ॥

ह्रींकारीं हृदयाम्बुजेऽहमधुना ह्रींकारसौधे शुभे
ह्रींकारोन्नतरत्नमञ्चफलके ह्रींकारशोणाम्बुजे ।
ह्रींकाराक्षरमुच्चरद्भगवतीमारोप्य शोणप्रभां
ह्रींकाराम्बुजवारिगन्धफलताम्बूलादिभिस्तोषये ॥ २७ ॥

ह्रींकारामृतपादमञ्जुलमणीवेद्यन्तरे भासुरां
श्रीदेवीं श्रितसर्वलोकसकलाभीष्टप्रदानोत्सुकाम् ।
श्रीश्रीमत्तनुमुद्यदर्ककिरणां श्रीशांभवीं श्रीकरी-
मात्मन्यैक्यमुपास्महे परतरां निर्वाणसंसिद्धये[1] ॥ २८ ॥

इति श्रीमहाषोडशीवर्णरत्नावलिस्तोत्रं संपूर्णम्

---

[1] मन्त्रोद्धारः—ह्रीं ह्रीं क्लीं ऐं सौं ओं ह्रीं श्रीं कएईलह्रीं हसकहलह्रीं सकलह्रीं सौं ऐं क्लीं ह्रीं ह्रीं ।

## १६. रेणुकास्तोत्रम्[1]

[पाकामृतांशुमकुटाभरणा भवानी
शोकापहा नतजनस्य शुभाखिलाङ्गी ।
कोकाकृतिस्तनभरा कुशलानि नित्यं
मूकाम्बिका मम तनोतु मुनीन्द्रवन्द्या ॥][2]

कालाग्न्यादि शिवावसानमखिलं ते गुल्फदघ्नं शिवे
मूर्तिं कीर्तयितुं न कस्य रसना लज्जाम्बुधौ मज्जति ।
तस्मात् त्वच्चरणैकदेशनखरज्योतिःस्फुलिङ्गा इव
स्फूर्जन्ति प्रभविष्णवश्च सततं ते पद्मनाभादयः ॥ १ ॥

कल्पः कोऽपि स शांभवो विजयते मातस्त्वया कल्पितो
यत्रानल्पविकल्पजालविमुखः कश्चिद्विपश्चित् परः ।
सा त्वं सत्त्ववतामपीह सुलभा नैवासि किं स्तूयसे
स्वच्छन्दं शिशवो यथा तव पुनः क्रीडन्ति वेदा इमे ॥ २ ॥

लीलाचामरधारिणीसहचरीगत्या महासिद्धयो
नूनं वञ्चयितुं स्फुरन्ति भवतीकारुण्यशून्यं जनम् ।
अम्ब त्वन्नयनाञ्चलं करुणया यस्मिन् परिक्रीडते
तस्य द्वारि निवारितोऽपि कुरुते सेवां सुराणां गणः ॥ ३ ॥

आ पातालतलात् फणीश्वरशिरोरत्नांशुनीराजिता-
दा सर्वज्ञनिकेतनादपि शिखायौतांशुधौताङ्कणात् ।

[1] Based on the MS. No. VB 27.
[2] MS adds: श्लोकस्याद्यन्तयोर्वाग्भवमुच्चार्य पठेदिति संप्रदायः ॥ ओम् ॥

एकच्छत्रमवाप्य वैभवमहो दीव्यन्ति ते संततं
ये संध्याचलनिश्चलं तव पदं ध्यायन्ति गायन्ति च ॥ ४ ॥

ये त्वामम्ब पलाशबिल्वकुसुमैरुल्लासिभिर्मल्लिका-
पुष्पैर्वा वनमल्लिकाविरचितैरुद्दामभिर्दामभिः ।
मुग्धोन्मीलितमालतीभिरभितः संपूजयन्त्यादरात्
तेषामुद्धृतसौरभा प्रतिदिनं व्याजृम्भते भारती ॥ ५ ॥

त्वां सह्याचलमौलिसुस्थितपदां श्री-एकवीराम्बिके
ये लिम्पन्ति सचन्द्रचन्दनरसैस्तेषां सुधास्राविणी ।
वाणीविस्मयवर्ण्यमानगिरिशव्यालोलगङ्गाजल-
स्वच्छन्दोर्मिपरंपराविजयिनी वाणी नरीनृत्यति ॥ ६ ॥

ये त्वां ब्राह्ममुहूर्तनिर्मलधियस्त्वाधारतश्चिन्तय-
न्त्यूर्ध्वं मूर्ध्नि सरोरुहेऽतिधवले पीयूषधारावृते ।
ते मृत्युं सहसा विजित्य रचयन्त्युच्चैर्गतिं नित्यशः
प्रत्यादिष्टपुरःसुधाकरसुधाहंभावसंभाविताः ॥ ७ ॥

यस्त्वां पश्यति तस्य नश्यति महापापान्धकारः क्षणात्
किं चार्थादपरे पुराणपुरुषप्राणप्रिये पार्वति ।
मूर्ध्नस्तस्य ततो भवेत् कृतधियः श्री-एकवीराम्बिके
दृश्यन्ते न मनागपीह यदियं प्रत्यक्षमुद्योतसे ॥ ८ ॥

किं योगेन किमर्चनेन किमथ ज्ञानेन किं कर्मणा
किं ध्यानेन किमिज्यया किमथवा दानेन किं दीक्षया ।
दृश्यन्ते यदि सह्यशैलशिखरश्रीगर्विताः सर्वदा
मातः पार्वति रेणुके तव पदाम्भोजप्रभाविभ्रमाः ॥ ९ ॥

हे सह्याचलनित्यकेलिरसिके कर्पूरकस्तूरिका-
विन्यस्तागरुकुङ्कुमैर्मलयजैस्त्वं चर्चिताभ्यर्चिता ।
ते दीव्यन्ति सुरेन्द्रमुख्यविबुधश्रेणीकिरीटस्फुर-
न्माणिक्यप्रतिबिम्बितारुणपदस्थाः संप्रदाः संपदाम् ॥ १० ॥

हे सह्याद्रिविनिद्रलिङ्गवपुषि श्री-एकवीराम्बिके
त्वां कृष्णागरुगुग्गुलुप्रभृतिभिर्ये धूपयन्त्यादरात् ।
ते कैलासनिवासिनीभिरभितः संचारितैश्चारुभि-
र्लीलाचामरमारुतैश्चिरतरं नन्दन्ति रुद्रा इव ॥ ११ ॥

मातः शांभवि जृम्भितामृतशिलालिङ्गात्मिके रेणुके
त्वां सह्याद्रिशिरोविहारसुलभां नीराजयन्त्यादरात् ।
ते वृन्दारकवृन्दवन्दितपदाश्चन्द्रार्कचूडामणि-
ज्योतिर्मेदुरमन्दिराङ्कणभुवो भूतिं लभन्तेऽद्भुताम् ॥ १२ ॥

दूरादङ्गणरङ्गसंगतरजोराजीविराजद्वपु-
स्तुभ्यं यः प्रणिपत्तिमम्ब कुरुते कश्चित् कदाचित् क्वचित् ।
संप्राप्य श्रियमिन्दुसुन्दरयशःसंदोहनिष्यन्दिनी-
मन्ते निर्विषयं स्वयं प्रविशति श्रीशांभवं वैभवम् ॥ १३ ॥

त्वामुद्दिश्य कदापि कोऽपि किमपि क्वापि प्रपद्यन् नरो
भक्त्यावेशवशीकृतो जपति वा यो यज्जुहोत्यादरात् ।
तत् तस्याक्षयमेव देवि भवति स्वर्गापवर्गप्रदं
त्वन्नामस्मरणं गतो विजयते सर्वोऽपि शर्वो जनः ॥ १४ ॥

मातस्त्वच्चरणेन यास्यति चिरं रुद्रोऽपि भद्राशय-
श्चूडाचन्द्रकलामरीचिनिचयैराचान्तरत्नासनैः ।

तत्त्वानामुपरि स्थितो विजयते वामादिभिर्नामभिः
श्रीकामेश्वरि दक्षपुत्रि गिरिजे त्वं रेणुके रक्ष माम् ॥ १५ ॥

मातर्भैरवि भर्गपत्नि गिरिजे गायत्रि गोत्रात्मिके
दुर्गे गौरि सरस्वति त्रिणयने श्रीसिद्धलक्ष्मी धृते ।
नित्ये मृत्युविकारहारिणि शिवे श्री-एकवीराम्बिके
सोऽहं ते शरणागतः करुणया त्वं रेणुके रक्ष माम् ॥ १६ ॥

इति श्रीरेणुकास्तोत्रं संपूर्णम्

---

## १७. लघुषोडशार्णकलाविलासः[1]

कल्याणं जगतामहं कथमुमे ध्यायामि सच्चिद्वपु-
स्त्रय्यन्तैर्मनसापि ते सह चिरं मृग्यापि यत्नेन च ।
ज्ञातुं नो वदितुं च शक्यमभवद् यस्मात् तथा भक्तितः
श्रीचक्राग्रगशैवमञ्चपरशैवाङ्कस्थितां भावये ॥ १ ॥

एलासौरभिकुन्तले परमुमे त्वां व्याप्य सर्वं स्थितां
काष्ठादिष्विव तैलवह्निनवनीताम्बुप्रवाहादिकम् ।
श्रीमूर्तिष्वतिसुन्दरासु नवबन्धूकप्रभास्वम्बिके
शक्यं किं नु तथापि ते परशिवे चास्थानमावाहये ॥ २ ॥

ईशावास्यमिदं त्वया सकलमप्यम्बासने मञ्जुले
त्वामारोहयितुं समस्तभुवनाधारं कथं शक्नुयाम् ।
मत्स्वान्ताब्जमपि त्वदासनवरं भूयाद्यतः सर्वदा
सर्वेषां हृदयारविन्दभवने नित्यं वसस्यम्बिके ॥ ३ ॥

[1] Based on the MS. No. VB 27.

लक्ष्यालक्ष्यविलक्षणं तव वपुः पादादिहीनं परं
पाद्यैस्तत् परितोषयामि कथमप्यत्यन्तमच्छात्मकम् ।
मत्स्वान्तद्रुतहेमरत्नकलशानीतातिभक्त्यम्बुना
विज्ञानामरसिन्धुजेन रचये प्रक्षालनं त्वत्पदे ॥ ४ ॥

ह्रींकारद्रुममञ्जरीशविनुतेऽनर्घ्याय हस्ताय ते
सर्वाभीष्टफलप्रदाननिरतायार्घ्यं कथं कल्पये ।
गृह्णीष्वाम्ब मया प्रदत्तमनघे विज्ञानपात्रे स्थितं
त्वद्रूपानुभवाम्बुकल्पितमथाप्यर्घ्यं महासुन्दरि ॥ ५ ॥

हन्त त्वन्मुखनिर्गतेन सकलं पूतं जगत् सर्वदा
वेदेनाचमनीयमद्य सहसा दातुं कथं शक्नुयाम् ।
तुभ्यं श्रीपरदेवते मयि तथाप्यम्बानुकम्पावशाद्
गृह्णीष्वाचमनं प्रकल्पितमुमे गन्धादिभिर्मिश्रितम् ॥ ६ ॥

सर्वं सर्वत एव पूर्णविभवे पूर्णेन पूर्णं कथं
व्याप्य त्वत्तनुमास्थितामतितरां शुद्धां जगत्पावनीम् ।
गाङ्गैर्निर्मलवारिभिः प्रभवति प्राणी जगत्यां तथा-
प्यानन्दामृतवारिणाहमभिषिञ्चाम्यादरादम्बिके ॥ ७ ॥

कल्प्यं कल्पकवृक्षसंभवमहत्कौसुम्भवस्त्रद्वयं
नानारत्नविचित्रमम्ब परमप्रीत्या कथं ते मया ।
व्यापिन्यै जगतां तथापि विमलेनाच्छादये त्वां परं
विज्ञानात्मकवाससा परशिवे गृह्णीष्व तत् प्रीतितः ॥ ८ ॥

हंसस्फाटिककुन्दसुन्दरतरश्रीमूर्तिमार्ये शिवे
कर्पूरागरुकुङ्कुमादिमिलितैर्गन्धैः कथं लेपये ।

श्रुत्युक्तां तव सर्वगन्धतनुगां निर्लेपनां निष्कलां
ब्रह्मात्मैक्यभवानुभूतिविमलज्ञानाख्यगन्धैः परम् ॥ ९ ॥

लग्नेन्दूज्ज्वलरेखमम्ब मकुटं माणिक्यदीप्त्युज्ज्वलं
कालोन्मीलितचम्पकाम्बुजमहद्बिल्वीदलानां स्रजा ।
संवेष्ट्याहमखण्डनिर्मलपरानन्दाम्बुधौ वा कदा
मज्जे मन्मथवैरिभामिनि वद स्वानन्दवारांनिधे ॥ १० ॥

ह्रींकारीं निगमागमान्तविदितां भक्त्या कथं तर्पये
धूपैर्गुग्गुलुसंभवैर्जगदिदं संव्याप्य नित्यं स्थिताम् ।
श्रीमूर्त्युद्भववासनाभिरधुना दिव्याभिराराधये
संविद्वह्निसमर्पिताखिलजगत्कालागरोर्धूपकैः ॥ ११ ॥

सर्वज्ञे सकलेष्टदाननिरते सामादिभिः संस्तुते
तुभ्यं कल्पयितुं प्रदीपमरुणे साज्यं कथं शक्नुयाम् ।
बालार्कायुतकोटिसुन्दरतनो भक्त्या तथाप्यञ्चिते
विज्ञानात्मकदीपदीप्तिभिरहं संतर्पयाम्यम्बिके ॥ १२ ॥

कल्याण्यम्ब कथं निवेदितुमहं नैवेद्यमार्ये शुभे
तप्ताष्टापदभाजनोज्ज्वलमुमे भक्ष्यादिभिः संयुतम् ।
शक्ष्ये संभृतसर्वलोकजठरायै तुभ्यमत्युज्ज्वलं
विश्वासेन समर्पयामि जगदात्मैक्यान्नमानन्ददम् ॥ १३ ॥

लक्ष्मीवन्दितपादपद्मयुगले लक्ष्मीधवाद्यर्चिते
कर्पूराज्यलसत्सुवर्णकलशप्रोद्भासि नीराजनम् ।
नानाशोभनगीतनृत्तसहितं दिव्याङ्गनाभिर्धृतं
वीक्ष्याद्याम्ब मुदं प्रयाहि कृपया श्रीकामराजेश्वरि ॥ १४ ॥

ह्रींह्रीमित्यनुभाव्यतां हृततमःपुञ्जे समस्तार्थदे
त्वत्पादाब्जयुगे भवत्वनुदिनं बिल्वाम्बुजार्चाविधिः ।
ह्रींकारार्णमनुप्रयुक्तमरुणे मत्स्वान्तजैः स्वानुभू-
त्यब्जैः साकमखण्डसौख्यनिलये श्रीचक्रराजेश्वरि ॥ १५ ॥

ह्रींकारोन्नतरत्नमञ्जुलमहत्सिंहासने भासुरा-
मूढे ब्रह्महरीश्वरादिविरलं श्रीकामराजाङ्ककम् ।
सर्वज्ञादिसमस्तशक्तिनिवहैः संसेवितामम्बिकां
सैवास्मीति विभावनानतिशतैः संतोषयाम्यन्वहम् ॥ १६ ॥

ये ये संततमन्धकारिगृहिणीस्तोत्रं समस्तार्थदं
ज्ञात्वार्थं हृदि मन्त्रराजविमलश्रीबीजवर्णक्रमात् ।
प्रोक्तं मन्त्रविदः पठन्ति सहसा कालत्रयेऽप्यम्बिका-
सांनिध्ये तदनन्यभावनधियस्तत्रैक्यतां प्राप्नुयुः[1] ॥ १७ ॥

इति श्रीलघुषोडशार्णकलाविलासस्तोत्रं संपूर्णम्

---

## १८. वराहमुखीस्तवः[2]

(वाराह्यनुग्रहाष्टकम्)

कुवलयनिभा कौशेयार्धोरुका मुकुटोज्ज्वला
हलमुसलिनी सद्भक्तेभ्यो वराभयदायिनी ।

[1] मन्त्रोद्धारः—कएईलह्रीं हसकहलह्रीं सकलह्रीं ह्रीं ।

[2] Based on the MS. No. 67245 (D. C. No. 379) which has no colophon; the title written on the margin of the MS. is *Anugrahāṣṭaka*. The above title is according to the last verse of the Stotra. These verses, without any significant variants, form part of the *Vārāhīstotra* in MD. 10830 consisting of 16 verses.

कपिलनयना मध्ये क्षामा कठोरघनस्तनी
जयति जगतां मातः सा ते वराहमुखी तनुः ॥ १ ॥

तरति विपदो घोरा दूरात् परिह्रियते भय-
स्खलितमतिभिर्भूतप्रेतैः स्वयं व्रियते श्रिया ।
क्षपयति रिपूनीष्टे वाचां रणे लभते जयं
वशयति जगत् सर्वं वाराहि यस्त्वयि भक्तिमान् ॥ २ ॥

स्तिमितगतयः सीदद्वाचः परिच्युतहेतयः
क्षुभितहृदयाः सद्यो नश्यद्दृशो गलितौजसः ।
भयपरवशा भग्नोत्साहाः पराहतपौरुषा
भगवति पुरस्त्वद्भक्तानां भवन्ति विरोधिनः ॥ ३ ॥

किसलयमृदुर्हस्तः क्लिश्येत कन्दुकलीलया
भगवति महाभारः क्रीडासरोरुहमेव ते ।
तदपि मुसलं धत्से हस्ते हलं समयद्रुहां
हरसि च तदाघातैः प्राणानहो तव साहसम् ॥ ४ ॥

जननि नियतस्थाने त्वद्वामदक्षिणपार्श्वयो-
र्मृदुभुजलतामन्दोत्क्षेपप्रणर्तितचामरे ।
सततमुदिते गुह्याचारद्रुहां रुधिरासवै-
रुपशमयतां शत्रून् सर्वानुभे मम देवते ॥ ५ ॥

हरतु दुरितं क्षेत्राधीशः स्वशासनविद्विषां
रुधिरमदिरामत्तः प्राणोपहारबलिप्रियः ।
अविरतचटत्कुर्वद्दंष्ट्रास्थिकोटिरटन्मुखो
भगवति स ते चण्डोच्चण्डः सदा पुरतः स्थितः ॥ ६ ॥

7

क्षुभितमकरैर्वीचीहस्तोपरुद्धपरस्परै-
श्चतुरुदधिभिः क्रान्ता कल्पान्तदुर्ललितोदकैः ।
जननि कथमुत्तिष्ठेत् पातालसद्मबिलादिला
तव तु कुटिले दंष्ट्राकोटी न चेदवलम्बनम् ॥ ७ ॥

तमसि बहुले शून्याटव्यां पिशाचनिशाचर-
प्रमथकलहे चोरव्याघ्रोरगद्विपसंकटे ।
क्षुभितमनसः क्षुद्रस्यैकाकिनोऽपि कुतो भयं
सकृदपि मुखे मातस्त्वन्नाम संनिहितं यदि ॥ ८ ॥

विदितविभवं हृद्यैः पद्यैर्वराहमुखीस्तवं
सकलफलदं पूर्णं मन्त्राक्षरैरिममेव यः ।
पठति स पटुः प्राप्नोत्यायुश्चिरं कवितां प्रियां
सुतसुखधनारोग्यं कीर्तिं श्रियं जयमुर्वराम् ॥ ९ ॥

इति श्रीवराहमुखीस्तवः समाप्तः

---

## १९ आर्यापञ्चदशीस्तोत्रम्[1]

### त्यागराजविरचितम्

करकलितचापबाणां कल्हाराङ्घ्रिं नमामि कल्याणीम् ।
कंदर्पदर्पजननीं कलुषहरां कामितार्थफलदात्रीम् ॥ १ ॥

[1] This and the following six Stotra-s, as well as the *Śiva-mīḍestavaratna* below, all by Tyāgarāja, disciple of Ānandanātha, are based on the MS. No. PM 644 (D. C. Nos. 159, 247, 268, 351, 381, 413, 458 and 1143). Two of these have been printed in the *Śaṃkaragurukulapatrikā* (vol. V, Nos. 15, 17) which is difficult to procure; hence they are included here to have all the Stotra-s of the author together in one place.

एषा स्तोतुं वाणी नैव समर्था तवेशि महिमानम् ।
शेषोऽप्यब्दसहस्रैः शेषं कृतवान् महेशि तव चरितम् ॥ २ ॥

ईशित्वादिसुपूज्यामिन्दिन्दिरकेशभारसूल्लसिताम् ।
इन्दीवरदलनयनामीप्सितदात्रीं नमामि शर्वाणीम् ॥ ३ ॥

लसदरुणभानुकोटिद्युतिनिधिमम्बां सुरेन्द्रलक्ष्यपदाम् ।
ललितां नमामि बाले लालितशिवहृदयकमलकलहंसीम् ॥ ४ ॥

ह्रींकारबीजरूपे हिमगिरिकन्ये हरीन्द्रभववन्द्ये ।
हिमकरधवलच्छत्रे हिताय भव नः सदा महाराज्ञि ॥ ५ ॥

हर्षोत्करजनयित्री हसितज्योत्स्ना तवेयमनवद्ये ।
हरगलहालाहलमपि हरति त्रैलोक्यमोहतिमिरं ते ॥ ६ ॥

सकलमनोरथदाने सत्यपि चरणे नतस्य तव निपुणे ।
संसेव्यते सुरतरुः सदाज्ञलोकैर्नु कृच्छ्रफलदाता ॥ ७ ॥

कनकरुचे चटुलगते कठिनस्तनभारनम्रकृशमध्ये ।
कान्ते कङ्कणहस्ते कम्बुग्रीवे नमोऽस्तु ते करुणे ॥ ८ ॥

हरनयनानन्दकरे हराङ्कसंस्थे हरिप्रमुखवन्द्ये ।
हरनटनसाक्षिभूते हरार्धदेहे नमोऽस्तु ते सुकृपे ॥ ९ ॥

लक्ष्मीप्रदकरुणा या लक्ष्मीपतिमल्पमम्ब कर्तुमलम् ।
लक्ष्यं कुरु मां तस्या लावण्यामृततरङ्गमाले त्वम् ॥ १० ॥

ह्रींकाररत्नगर्भे हेमाचलमन्दरस्तनोल्लसिते ।
हेरम्बप्रियजननि हे वसुधे देहि मे क्षमां नित्यम् ॥ ११ ॥

सत्संप्रदायविदिते सकलागमनिगमसारतत्त्वमयि ।
सावित्र्यर्पय वदने सकलरसाश्रयसुवाक्सुधाधाराम् ॥ १२ ॥

करकङ्कणमणिदिनमणिकरविकसितचरणकमलमकरन्दम् ।
करुणापयोनिधे मे कामाक्षि स्वान्तषट्पदः पिबतु ॥ १३ ॥

लसदिक्षुचापसुमशरलक्षितदोर्वल्लिवीर्यमभयेन ।
लक्षाधिकदैत्यकुलं लघुपटवासं कृतं कथं चित्रम् ॥ १४ ॥

ह्रींकारकेलिभवने हिमकरमौल्यङ्कमञ्जुपर्यङ्के ।
हृदयसरोजे मे वस हृदयानन्दप्रबोधपरहंसि ॥ १५ ॥

आर्यापञ्चदशीं तामार्यां यो भजति शुद्धधीर्नित्यम् ।
भार्ये लक्ष्मीवाण्यौ पर्यायात् तस्य सादरं भवतः[1] ॥ १६ ॥

इत्यानन्दनाथपादपद्मोपजीविना काश्यपगोत्रोत्पन्नेनान्ध्रेण त्यागराजनाम्ना विरचितमार्यापञ्चदशीस्तोत्रं संपूर्णम्

---

## २०. धर्माम्बिकास्तवः[2]

त्यागराजविरचितः

कल्याणामृतकामधेनुमहिले कामप्रियाहर्षदे
कारुण्यामृतवापिके पिकशिशुस्वानन्दसल्लापिनि ।
कामेशप्रियकामकल्पलतिके कादम्बवाटीप्रिये
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ १ ॥

[1] मन्त्रोद्धारः—कएईलह्रीं हसकहलह्रीं सकलह्रीं ।

[2] See note on the *Āryāpañcadaśīstotra* on page 98 above.

एणीबालविलोचने फणिमणिश्रेणीलसत्कङ्कणे
तूणीराकृतिजङ्घिके त्रिनयने स्थाणोर्मनोहारिणि ।
वाणीपाणिसरोजवादितलसद्वीणास्वरालापिके
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ २ ॥

ईशित्वादिविभूतिकस्वविभवे ईंकारसिंहासने
इन्द्राणीपठितस्तुते इहपरत्राणध्वजे इन्दिरे ।
ईशानादिसुरेन्द्रसेवकजने ईशाधिराजेश्वरी
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ ३ ॥

लावण्याब्धिपयोजवक्त्रनयने लक्ष्मीकरालोकने
लक्ष्मीकान्तनिषेविताङ्घ्रिकमले लम्बोदरश्रीकरि ।
लक्ष्यालक्ष्यविलक्षणे क्षणवतां स्वानन्दवृद्धिप्रदे
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ ४ ॥

ह्रीपाशादिविमोचनेऽतिचतुरे हृद्ग्रन्थिविच्छेदिके
हृद्यानन्दसुधारसार्द्रमधुना संतर्पणाह्लादिनि ।
ह्रींकारार्थजगद्विलासविभवे विद्ये विमर्शात्मिके
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ ५ ॥

हस्तिश्रेष्ठसुकुम्भसंनिभकुचे हर्यक्षमध्ये शुभे
हेमाब्जाननपाणिपादनयने चन्द्रार्धफाले शिवे ।
हे मारारिमतेर्विमोहदलसन्नीलालके निर्मले
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ ६ ॥

सत्यानन्दचिदीश्वरप्रणयिनी सौभाग्यरत्नाकरी
साम्राज्यप्रभुदेशिकेन्द्रकरुणास्यन्दामृतस्वर्धुनी ।

सर्वाशारहितस्य भक्तहृदयस्यानन्दकादम्बिनी
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ ७ ॥

कल्पे कालकलेशि कल्पकलने संकल्पसिद्धाखिले
कालाकालविभागकल्पनकले कालान्तकप्रेयसि ।
कालोपाधिविवर्जिते कलिमलप्रध्वंसिनी कामदे
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ ८ ॥

हक्षद्वन्द्वदलत्रिकोणविलसज्ज्योत्स्नाकलाराधिते
हंसद्वन्द्वगतिप्रबोधजननश्रीदेशिकेन्द्रात्मिके ।
हंसारोहविचक्षणे अभयदे आनन्दसंवर्धिनी
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ ९ ॥

लज्जानम्रमुखे प्रनृत्यति शिवे लास्यप्रिये लक्षणे
लक्ष्यार्थे लयवर्जिते ललितवाक्पीयूषसंदोहिनि ।
लक्ष्मीमानसराजहंसि ललिते लामज्जगन्धप्रिये
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ १० ॥

ह्रींकारे हृदयत्रिकोणनिलये हृद्ये सुराराधिते
ह्रींकारध्वनिलीनचित्तसुलभे हृष्टेश्वरेष्टेश्वरि ।
ह्रींकाराभिमुखप्रशान्तकलनासर्वज्ञसाम्राज्यदे
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ ११ ॥

सत्यासत्यविवर्जिते समरसे संविल्लते शाश्वते
सर्वज्ञानविबोधिनीशकरुणे सौभाग्यविद्यामयि ।
सच्चित्सौख्यविलासकेलिकुतुके सर्वापवर्गात्मिके
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ १२ ॥

कर्माकर्मविवर्जिते कविमुखे वाग्वृष्टिकादम्बिनी
काव्यालापविबोधिनीशकलिके कौमारि कात्यायनि ।
कान्तार्धेन्दुविभूषणे स्मरकले श्रीकामकोटीश्वरी
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ १३ ॥

लब्धश्रीकमलालयालयलसत्कामेश्वरप्रेयसी
लाक्षारक्तरसप्रलिप्तचरणद्वन्द्वे लघुश्यामले ।
लौहित्यच्छविपाटलीसुमपदे पर्याप्तकामप्रदे
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे ॥ १४ ॥

ह्रींकारोत्थितनादसंततिसुधाधाराभिसंतर्पिते
ह्रींकारत्रयमन्त्रविद्रुमलताज्योतिःस्वरूपे परे ।
ह्रींकाराक्षररूपिणि त्रिभुवनश्रीराजराजेश्वरी
देहि श्रीपदपद्मभक्तिमनिशं धर्माम्बिके श्रीशिवे[1] ॥ १५ ॥

मूलालवालजपराविटपिप्रसूनै-
रभ्यर्चिता श्रुतिरहस्यसुगन्धगन्धैः ।
प्रस्पन्दिधीपवनचालितवाङ्मयैस्त्वं
त्यागाधिराजमहिषी वरदे प्रसीद ॥ १६ ॥

इत्यानन्दनाथपादपद्मोपजीविना काश्यपगोत्रोत्पन्नेनान्ध्रेण
त्यागराजनाम्ना विरचितः धर्माम्बिकास्तवः संपूर्णः

---

[1] मन्त्रोद्धारः—कएईलह्रीं हसकहलह्रीं सकलह्रीं ।

## २१. नवाक्षरीस्तोत्रम्[1]

त्यागराजविरचितम्

श्रीगुरुचरणसरोजं श्रीकरभवतरणसुकरदृढनावम् ।
मच्चित्तमधुपझंकृतमानन्दं नौमि शांकरं शरण्यम् ॥ १ ॥

ऐन्द्रधनुर्मरतकभामैरावतनाथगीर्भिरभ्यर्च्याम् ।
ऐंकारार्थस्वरूपामैशानीनाथसेवितां वन्दे ॥ २ ॥

ह्रीनतदैत्यसमूहां हृद्यां सुरलोकसेविताङ्घ्रियुगाम् ।
ह्रींकारान्त्यसरूपां हृदयविलासप्रचोदितां वन्दे ॥ ३ ॥

क्लींकारकामजननीं क्लीमितिशब्दप्रपूरितदिगन्ताम् ।
क्लीबस्त्रीपुंशब्दक्रीडारूपां नमामि विश्वमयीम् ॥ ४ ॥

चामरबिभ्रद्वाणीचन्द्रसजातासुसेव्यपार्श्वयुगाम् ।
चरणतलमहिषमुण्डां चापादिकरां नमामि चामुण्डाम् ॥ ५ ॥

मुण्डमणिहारकण्ठीं मुकुरकपोलप्रभासुशोभमुखीम् ।
मुहुरास्फालितधनुषं मुरहरभगिनीं नमामि मुग्धतनुम् ॥ ६ ॥

डाकिन्याद्यभितुष्टां डमरुकनादेन पूरितदिगन्ताम् ।
डम्भाभिमानहन्त्रीं डामरतन्त्रप्रकाशितां वन्दे ॥ ७ ॥

यैवर्णसत्यमायास्यै दत्तान्यायुधानि शक्राद्यैः ।
यौवनमदसाम्राज्यायै तस्यै नमोऽस्तु विद्यायै ॥ ८ ॥

[1] See note on the *Āryāpañcadaśīstotra* on page 98 above.

विश्वोत्तीर्णां विद्यां विविधजगच्चित्रकल्पनारूपाम् ।
वियदादिसृष्टिहेतुं विश्वासैकप्रकाशितां नौमि ॥ ९ ॥

चेतसि नितरां वासितचेतोमयि चैत्यचेतने चतुरे ।
चम्पककलिकानासे चामीकरभासुराङ्गि नौमि त्वाम् ॥ १० ॥

अक्षरनवाक्षरीयं निक्षेपमयी सुवाक्सुधारूपा ।
एतत् स्तोत्रं पठतां यच्छति सौभाग्यकीर्तिपुष्टिधृतीः[1] ॥ ११ ॥

इत्यानन्दनाथपादपद्मोपजीविना काश्यपगोत्रोत्पन्नेनान्ध्रेण
त्यागराजनाम्ना विरचितं नवाक्षरीस्तोत्रं संपूर्णम्

---

## २२. राजराजेश्वरीस्तवः[2]

त्यागराजविरचितः

या त्रैलोक्यकुटुम्बिका वरसुधाधाराभिसंतर्पिणी
भूम्यादीन्द्रियचित्तचेतनपरा संविन्मयी शाश्वती ।
ब्रह्मेन्द्राच्युतवन्दितेशमहिषी विज्ञानदात्री सतां
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ १ ॥

यां विद्येति वदन्ति शुद्धमतयो वाचां परां देवतां
षट्चक्रान्तनिवासिनीं कुलपथप्रोत्साहसंवर्धिनीम् ।
श्रीचक्राङ्कितरूपिणीं सुरमणेर्वामाङ्कसंशोभिनीं
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ २ ॥

[1] मन्त्रोद्धारः—श्रीं ऐं ह्रीं क्लीं चामुण्डायै विच्चे ।
[2] See note on the *Āryāpañcadaśīstotra* on page 98 above.

या सर्वेश्वरनायिकेति ललितेत्यानन्दसीमेश्वरी-
त्यम्बेति त्रिपुरेश्वरीति वचसां वाग्वादिनीत्यन्नदा ।
इत्येवं प्रवदन्ति साधुमतयः स्वानन्दबोधोज्ज्वला-
स्तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ ३ ॥

या प्रातः शिखिमण्डले मुनिजनैर्गौरी समाराध्यते
या मध्ये दिवसस्य भानुरुचिरा चण्डांशुमध्ये परम् ।
या सायं शशिरूपिणी हिमरुचेर्मध्ये त्रिसंध्यात्मिका
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ ४ ॥

या मूलोत्थितनादसंततिलवैः संस्तूयते योगिभि-
र्या पूर्णेन्दुकलामृतैः कुलपथे संसिच्यते संततम् ।
या बन्धत्रयकुम्भितोन्मनिपथे सिद्ध्यष्टकेनेड्यते
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ ५ ॥

या मूकस्य कवित्ववर्षणसुधाकादम्बिनी श्रीकरी
या लक्ष्मीतनयस्य जीवनकरी संजीविनीविद्यया ।
या द्रोणीपुरनायिका द्विजशिशोः स्तन्यप्रदात्री मुदा
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ ६ ॥

या विश्वप्रभवादिकार्यजननी ब्रह्मादिमूर्त्यात्मना
या चन्द्रार्कशिखिप्रभासनकरी स्वात्मप्रभासत्तया ।
या सत्त्वादिगुणत्रयेषु समतासंवित्प्रदात्री सतां
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ ७ ॥

या क्षित्यन्तशिवादितत्त्वविलसत्स्फूर्तिस्वरूपा परं
या ब्रह्माण्डकटाहभारनिवहन्मण्डूकविश्वंभरी ।

या विश्वं निखिलं चराचरमयं व्याप्य स्थिता संततं
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ ८ ॥

या वर्गाष्टकवर्णपञ्जरशुकी विद्याक्षरालापिनी
नित्यानन्दपयोऽनुमोदनकरी श्यामा मनोहारिणी ।
सत्यानन्दचिदीश्वरप्रणयिनी स्वर्गापवर्गप्रदा
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ ९ ॥

या श्रुत्यन्तसुशुक्तिसंपुटमहामुक्ताफलं सात्त्विकं
सच्चित्सौख्यपयोदवृष्टिफलितं सर्वात्मना सुन्दरम् ।
निर्मूल्यं निखिलार्थदं निरुपमाकारं भवाह्लाददं
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ १० ॥

या नित्याव्रतमण्डलस्तुतपदा नित्यार्चनातत्परा
नित्यानित्यविमर्शिनी कुलगुरोर्वाक्यप्रकाशात्मिका ।
कृत्याकृत्यमतिप्रभेदशमनी कात्स्न्यार्त्मलाभप्रदा
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ ११ ॥

यामुद्दिश्य यजन्ति शुद्धमतयो नित्यं पराग्नौ स्रुचा
मत्या प्राणघृतप्लुतेन्द्रियचरुद्रव्यैः समन्त्राक्षरैः ।
यत्पादाम्बुजभक्तिदार्ढ्यसुरसप्राप्त्यै बुधाः संततं
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ १२ ॥

या संविन्मकरन्दपुष्पलतिकास्वानन्ददेशोत्थिता
सत्संतानसुवेष्टनातिरुचिरा श्रेयःफलं तन्वती ।
निर्धूताखिलवृत्तिभक्तधिषणाभृङ्गाङ्गनासेविता
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ १३ ॥

यामाराध्य मुनिर्भवाब्धिमतरत् क्लेशोर्मिजालावृतं
यां ध्यात्वा न निवर्तते शिवपदानन्दाब्धिमग्नः परम् ।
यां स्मृत्वा स्वपदैकबोधमयते स्थूलेऽपि देहे जन-
स्तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ १४ ॥

या पाशाङ्कुशचापसायककरा चन्द्रार्धचूडालस-
त्काञ्चीदामविभूषिता स्मितमुखी मन्दारमालाधरा ।
नीलेन्दीवरलोचना शुभकरी त्यागाधिराजेश्वरी
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ १५ ॥

या भक्तेषु ददाति संततसुखं वाणीं च लक्ष्मीं तथा
सौन्दर्यं निगमागमार्थकवितां सत्पुत्रसंपत्सुखम् ।
सत्सङ्गं सुकलत्रतां सुविनयं सायुज्यमुक्तिं परां
तां वन्दे हृदयत्रिकोणनिलयां श्रीराजराजेश्वरीम् ॥ १६ ॥

इत्यानन्दनाथपादपद्मोपजीविना काश्यपगोत्रोत्पन्नेनान्ध्रेण
त्यागराजनाम्ना विरचितः श्रीराजराजेश्वरीस्तवः संपूर्णः

---

## २३. शान्तिस्तवः[1]

त्यागराजविरचितः

स्वानन्दमन्दहसितां शिववामभागां
भृङ्गावलीकचभराकलितेन्दुमौलिम् ।

[1] See note on the *Āryāpañcadaśīstotra* on page 98 above.

श्यामां विशालनयनामतिकोमलाङ्गीं
वन्दे स्मरारिमहिलां वरदां शिवाख्याम् ॥ १ ॥

कालदेशकलनाविवर्जिता स्वेच्छयैव भुवनान्यजीजनत् ।
क्रीडति स्वयमनेकभूमिका सा शिवाहमिति शान्तिमाश्रये ॥ २ ॥

स्वप्रकाशशिवशक्तिरूपिणी सर्वभूतहृदयाब्जहंसिका ।
निष्प्रकारसुखचन्द्रचन्द्रिका सा शिवाहमिति शान्तिमाश्रये ॥ ३ ॥

सर्वभूतहृदयप्रचोदिका शर्वविष्णुनिखिलात्मरूपिणी ।
निर्विकाररसरूपलक्षिता सा शिवाहमिति शान्तिमाश्रये ॥ ४ ॥

या परादिवचसामगोचरा रूपनामरहिता परा वरा ।
या त्रयीप्रमुखमार्गदर्शिनी सा शिवाहमिति शान्तिमाश्रये ॥ ५ ॥

निर्ममा निखिललोकरक्षणी कर्मकाण्डफलदानकामधुक् ।
आप्तकामधिषणात्मरूपिणी सा शिवाहमिति शान्तिमाश्रये ॥ ६ ॥

पञ्चक्लेशघनमुक्तचन्द्रिका पञ्चभूतजडविश्वदीपिका ।
पञ्चमूर्तिरवबिन्दुनायिका सा शिवाहमिति शान्तिमाश्रये ॥ ७ ॥

चिद्विलासजगदेकरूपिणी ह्यस्तिभातिसुखरूपसत्तया ।
षड्विकाररहिता निराश्रया सा शिवाहमिति शान्तिमाश्रये ॥ ८ ॥

यागयोगजपहोमकर्मभिर्नैव जातु परमा हि लभ्यते ।
प्रज्ञया सहजयैव याप्यते सा शिवाहमिति शान्तिमाश्रये ॥ ९ ॥

जाग्रदादिसमयेषु वृत्तिषु भ्राजते तनुषु सर्वसाक्षिणी ।
स्वर्णवत् सकलभूषणेषु या सा शिवाहमिति शान्तिमाश्रये ॥ १० ॥

नेति नेति निगमोक्तिबोधिता ज्ञानिनां तु हृदये सदोज्ज्वला ।
भेदभावगलनात् सदात्मिका सा शिवाहमिति शान्तिमाश्रये ॥ ११ ॥

भेदतो भवति भीरिति श्रुतेर्यान्ति तेन रहिता यदेकताम् ।
आपगास्तु सरितामिवेश्वरे सा शिवाहमिति शान्तिमाश्रये ॥ १२ ॥

नामरूपकुलधर्मवर्जिता जन्मनाशरहिता सदव्यया ।
कल्पनान्तसमयेऽपि या स्थिरा सा शिवाहमिति शान्तिमाश्रये ॥ १३ ॥

कोटिकोटिजनिपुण्यसंस्कृतः सर्वकामरहितो जितेन्द्रियः ।
यां विभाव्य परिमुच्यते भवात् सा शिवाहमिति शान्तिमाश्रये ॥ १४ ॥

शास्त्रपाठमननैर्न लभ्यते धैर्यवीर्यनयतः पराक्रमैः ।
केवलं गुरुदृशा प्रकाशते सा शिवाहमिति शान्तिमाश्रये ॥ १५ ॥

प्राणबुद्धिहृदयात्मसाक्षिणी सर्वयज्ञपरितृप्तिकामिनी ।
ज्ञानपुष्परसपूजिताभया सा शिवाहमिति शान्तिमाश्रये ॥ १६ ॥

यत्र नास्ति निखिलं चराचरं ह्येकरूपरसवस्त्वभेदतः ।
नेह नेति विधिवाक्यचोदिता सा शिवाहमिति शान्तिमाश्रये ॥ १७ ॥

या गुरूक्तिसुधया मनोमले क्षालिते सपदि सत्यचिन्मणिः ।
द्योतते सकलधीप्रभासुरा सा शिवाहमिति शान्तिमाश्रये ॥ १८ ॥

दह्यते न शिखिना सदाव्यया सत्तया दहति पावकस्तृणम् ।
शुष्यते न मरुताखिलेश्वरी सा शिवाहमिति शान्तिमाश्रये ॥ १९ ॥

सिद्ध्यसाध्यपरमन्त्रवर्जिता ह्यष्टसिद्धिपरसिद्धिभूमिका ।
शुद्धचित्तपरमामृतात्मिका सा शिवाहमिति शान्तिमाश्रये ॥ २० ॥

देहमानदलितस्य योगिनः सर्वतोऽपि परिपूर्णकामता ।
भाति या परमगुप्तरूपिणी सा शिवाहमिति शान्तिमाश्रये ॥ २१ ॥

इन्द्रजालमिदमल्पकालिकं विश्वमेवमिति निश्चयात्मनः ।
बोधरूपत इहैव भाति या सा शिवाहमिति शान्तिमाश्रये ॥ २२ ॥

विश्वयोनिरमृताभयाक्षरा नित्यतृप्तिरजरा परात्परा ।
इत्थमागमवचोभिरीड्यते सा शिवाहमिति शान्तिमाश्रये ॥ २३ ॥

सर्वदा समरसात्मरूपिणी सर्वलोकजननी ह्यरूपिणी ।
शर्वनृत्यसुखसाक्षिणी च या सा शिवाहमिति शान्तिमाश्रये ॥ २४ ॥

इन्द्रियार्थसुखबोधबोधिनी चन्द्रभानुशिखिदीप्तिकारिणी ।
बन्धवर्गभयमोहमोचिनी सा शिवाहमिति शान्तिमाश्रये ॥ २५ ॥

देहजीवजगदीशबाधने शिष्यते स्वयमनन्तरूपिणी ।
व्यापिनी जगति संततं च या सा शिवाहमिति शान्तिमाश्रये ॥ २६ ॥

प्राणबन्धपरिशुद्धचेतसां निर्विकल्पसुखरूपिणी सदा ।
चिन्मयी सदसदात्मिका च या सा शिवाहमिति शान्तिमाश्रये ॥ २७ ॥

यत्सुखाब्धिलवलेशनिर्वृता ब्रह्मविष्णुसुरमानवादयः ।
संभवन्ति युगकल्पभेदतः सा शिवाहमिति शान्तिमाश्रये ॥ २८ ॥

ब्रह्मलोकतृणमानिने सदा तृप्तिरूपपरशान्तिदायिनी ।
योगिने समरसं ददाति या सा शिवाहमिति शान्तिमाश्रये ॥ २९ ॥

सर्वमेकरसमित्युदेति या निर्मला निरवधिश्च चेतसि ।
देशिकेन्द्रपदभक्तियोगिनः सा शिवाहमिति शान्तिमाश्रये ॥ ३० ॥

मायिकस्य जगतः स्थितिर्यया स्वप्नकालनगरीव योगिनः।
भासते निजसुखैकभोगिनः सा शिवाहमिति शान्तिमाश्रये ॥ ३१ ॥

निस्तरङ्गसुखसिन्धुरूपिणीं यामनुस्मरति बन्धमुक्तये।
शान्तिदान्तिधृतियुक्तयोगिराट् सा शिवाहमिति शान्तिमाश्रये ॥ ३२ ॥

भूतभाविमतिवृत्त्यभाविकां वर्तमानसुखवृत्तिभासिकाम्।
येऽनुसंदधति नित्यमादरात् सा शिवाहमिति शान्तिमाश्रये ॥ ३३ ॥

बुद्धिमोहपटले व्यपोहिते शाणचक्रनिगमोक्तितः स्वयम्।
प्रस्फुरत्यविरतं च चिन्मणिः सा शिवाहमिति शान्तिमाश्रये ॥ ३४ ॥

नाहमित्यनृतजाड्यभूमयः सच्चिदेव सकलात्मभासकः।
इत्थमेकरसरूपशेमुषी सा शिवाहमिति शान्तिमाश्रये ॥ ३५ ॥

वृत्तिसंधिविलसत्स्वरूपिणी प्रज्ञया हृदि विभाव्यते सदा।
नित्यमुक्तिसुखकाङ्क्षिणा दृढं सा शिवाहमिति शान्तिमाश्रये ॥ ३६ ॥

त्यागराजसुखरूपिणी परं योगिराजहृदयोज्ज्वला सदा।
आगमाद्यखिलमानबोधिता सा शिवाहमिति शान्तिमाश्रये ॥ ३७ ॥

**शान्तिस्तवं** पठति नित्यमनन्यभक्त्या
यो मानवो भवति शंकर एव साक्षात्।
संसारदुःखभयमोचनदक्षकल्पं
स्वात्मापरोक्षकरणे गुरुपादकल्पम् ॥ ३८ ॥

इत्यानन्दनाथपादपद्मोपजीविना काश्यपगोत्रोत्पन्नेनान्ध्रेण त्यागराजनाम्ना विरचितः शान्तिस्तवः संपूर्णः

---

## २४. षट्त्रिंशन्नवमल्लिकास्तवः[1]

त्यागराजविरचितः

या माता सदसद्विलक्षणपरासंवित्स्वरूपा सदा
जाग्रत्स्वप्नसुषुप्तिवृत्तिविलसत्स्फूर्तिः परा वैखरी ।
इच्छादित्रयधर्मिणी परगुहाहंताप्रकाशात्मिका
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ १ ॥

यां मूलाम्बुजकर्णिकाप्रविलसत्कामाख्यपीठे परां
सोमार्कानलदीप्तिमक्षरतनुं बालां विमर्शात्मिकाम् ।
ध्यायन्तः सहसा भजन्ति कवितापाण्डित्यमत्यद्भुतं
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ २ ॥

यामम्भोजमृणालतन्तुसुतनुं विद्युत्सहस्रप्रभां
कूजन्तीं कुलकुण्डखेलनपरां प्राणानिलेद्योजनीम् ।
ओड्याणे परिचिन्तयन्ति कृतिनः पीयूषवर्षाप्तये
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ ३ ॥

यां स्मृत्वा मणिपूरके रविनिभे रौद्रे कृशान्वालये
पश्यन्तीं पदवाक्यपद्यरचनापाण्डित्यसंवर्धिनीम् ।
वक्त्राम्भोरुहसौधनर्तननटीं पश्यन्ति शैवाः सदा
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ ४ ॥

यां ध्यायन्ति विधूतपापहृदया हृत्पुण्डरीकाम्बरे
निर्दोषारुणरत्नदीपतुलितां प्रज्ञानसीमन्तिनीम् ।

[1] See note on the *Āryāpañcadaśīstotra* on page 98 above.

संलब्धुं सकलात्मिकां परमनःकायप्रवेशक्रियां
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ ५ ॥

यां जालंधरबन्धनोर्ध्वगमनां चक्रे विशुद्धौ शर-
ज्ज्योत्स्नाकाशनिभे स्वराक्षरलसद्द्व्यष्टाब्जपत्रान्विते ।
ध्यायन्त्यात्मसुखानुभूतिममलां लब्धुं चिरंजीवितां
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ ६ ॥

यां पश्यन्ति पुराणपुण्यलसिकाः श्रीदेशिकाज्ञाधरा
भ्रूमध्यद्विदलाम्बुजप्रविलसच्चान्द्रीकलां शाश्वतीम् ।
नित्यानन्दसुधासमुद्रलहरीक्रीडानुभूत्यै सदा
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ ७ ॥

यां पार्श्वस्थितहंसवर्णविलसद्बिन्दौ त्रिवर्णात्मिकां
प्रद्युम्नीयकलामयीं निजसुखोद्बोधप्रसादोदयाम् ।
सिद्धान्तार्थरता जितेन्द्रियकणा ध्यायन्त्यभेदाय वै
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ ८ ॥

यामर्धेन्दुसरोरुहेऽर्धशशभृद्रूपे हिमांशुप्रभे
पश्यन्त्यात्मसुखाय विस्वनमयीं तत्तन्त्रसंख्यालवैः ।
हृल्लेखामनुपारगा नियमितप्राणादिसर्वेन्द्रिया-
स्तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ ९ ॥

रोधिन्यम्बुरुहे त्रिकोणरुचिरे ज्योत्स्नानिभे सर्वदा
द्वात्रिंशल्लवमाननिस्वनवहां पश्यन्ति यां खेचरीम् ।
मायाक्रीडनपेशलानिजपदानन्दाप्तयेऽप्यद्भुतं
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ १० ॥

नादाब्जे वरपद्मरागमणियष्ट्या स्पर्धमानां परां
गच्छन्तीं शिवधाम षोडशलवध्यानात्मिकां संविदा ।
तारानायकभानुसङ्गरसिकाः पश्यन्ति मुद्रान्विता-
स्तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ ११ ॥

नादान्तेऽष्टलवध्वनिप्रकटितां विद्युच्छटाभासुरां
यां सव्यस्थितबिन्दुलाङ्गलमिव स्वं रूपमाबिभ्रतीम् ।
यान्तीमूर्ध्वकुलं यमादिनिरताः पश्यन्त्यखण्डाप्तये
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ १२ ॥

तिर्यग्बिन्दुयुगस्य वामविचरद्रेखामये निर्मले
शक्त्यब्जे तरुणार्करोचिषि च यां पश्यन्ति लक्षेक्षणाः ।
स्वानन्दाय चतुर्लवस्वनमयीं श्रीपादुकागामिनीं
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ १३ ॥

बिन्द्वाश्लिष्टकृशानुकोणतनुमत्यां व्यापिकायां सदा
बालोष्णांशुरुचौ परां लवयुगध्यानात्मिकां संविदम् ।
यां पश्यन्ति मनीषिणः कुलवधूपादाब्जरेणूद्वहा-
स्तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ १४ ॥

ऊर्ध्वाधोविलसत्सुबिन्दुयुतरेखाम्भोरुहे निर्मले
सूर्याभे समनेतिनाम्नि लवनिस्वानात्मिकां चेतनाम् ।
यां पश्यन्त्यमनस्कयोगविभवायान्तर्मुखाराधका-
स्तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ १५ ॥

उन्मन्यम्बुरुहे द्विषडदिनमणिज्योतिर्मये चिन्मयीं
बिन्द्वाधारसमुल्लसत्सग्लसद्रेखामये योगिनः ।

यां पश्यन्त्यणिमादिविघ्नदलने धीधैर्यविज्ञानिन-
स्तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ १६ ॥

यां धात्रादिविहीनधामरसिकां ज्ञात्रादिविश्रान्तिका-
मात्मारामपरायणश्रुतिशिरोमौनार्थरूपां शिवाम् ।
निर्द्वन्द्वात्मपरायणा अनुभवन्त्यानन्दसीमातिगा-
स्तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ १७ ॥

यामाबालबुधाङ्गगोपविदिताहंरूपिणीं सर्वदा
सर्वोपप्लवमुक्तधामरमणीं स्वानन्दलीलावतीम् ।
निस्त्रैगुण्यपरापरेतररसाः स्वेनैव पश्यन्त्यहो
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ १८ ॥

यां प्रज्ञेति वदन्ति केचिदितरे सद्रूपिणीत्यादिमां
शून्यं केचिदजेति केचिदपरे जाड्यात्मिकेत्यद्भुतम् ।
जाड्याजाड्यमयीति केचिदितरे तद्ब्रह्म सर्वात्मकं
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ १९ ॥

या काष्ठा परमा गतिः परमभूदस्पन्दिनी स्पन्दिनी
सृष्ट्वादौ निखिलं चराचरमिदं स्वस्मिन् प्रवेश्येच्छया ।
क्रीडत्येकरसात्मिकापि बहुधा भातीव या सर्वगा
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ २० ॥

याहंप्रत्ययसाक्षिणी जगदुपादानं च निष्कारणं
यावस्थात्रयवर्जितापि सकलावस्थात्मिका संविदा ।
या भोक्तृत्वविलक्षणापि सततं भोक्त्री प्रमोदान्निजात्
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ २१ ॥

सर्वानुग्रहधर्मिणी स्वयमभूत् सादाख्यधर्मेण या
लोकानां परमेश्वरी किल तिरोधानेन धर्मेण या ।
या नाशस्थितिसृष्टिधर्मविभवै रुद्रादिमूर्त्यात्मिका
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ २२ ॥

या सोमार्कमहीजलाग्निमरुदाकाशात्मदेहैः सदा
सर्वं विश्वमिदं दधत्यपि परं निर्देहलेपाद्भुतम् ।
या वेदागमशास्त्रमूलगुरुरप्यव्याजमौनात्मिका
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ २३ ॥

सूक्ष्मात् सूक्ष्मतमा विभोर्विभुतमा या मध्यमा सर्वदा
श्रोत्रादेः श्रवणादिरात्मनि चिदाभासो मतौ प्रेरिका ।
विश्वो जाग्रति तैजसः परमभूत् स्वप्ने सुषुप्तौ सुखं
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ २४ ॥

निर्दोषा सकलान्तरङ्गरमणीयाप्यद्भुतं निष्क्रिया
या सर्वेन्द्रियकर्मकर्त्र्यपि सतां पाशाष्टकच्छेदिनी ।
निर्लोभा निखिलप्रपञ्चममताहंतात्मिकाप्यद्वयी
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ २५ ॥

अध्वातीतचरित्रवत्यपि सतां सन्मार्गसंदर्शिनी
या पूजाविमुखी नृणां निजपदार्चायां नियन्त्री परम् ।
सर्वाहंकृतिरूपिणी नतजनाहंकारविच्छेदिनी
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ २६ ॥

या पञ्चाननमञ्चमध्यविलसत्कामेश्वराङ्कस्थिता
नित्या पूजितपादपद्मयुगला नित्योत्सवाह्लादिनी ।

सर्वानन्दगृहोज्ज्वला गुरुकृपापीयूषदृग्गोचरा
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ २७ ॥

नैष्कर्म्यां स्वयमप्यहो निजकृपापात्रस्य यत् संचितं
प्रारब्धं क्षपयत्यनन्यगतिकं तं याकरोद्देवताम् ।
निर्धर्मिण्यपि सर्वदा निजनतायानन्ददायिन्यहो
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ २८ ॥

या ब्रह्माण्डजगत्प्रसूरपि सदा तारुण्यवत्यद्भुतं
सर्वैश्वर्यरतापि गर्वमदमात्सर्यादिहीना परम् ।
त्रैलोक्येश्वरराज्यपि श्रितजनैर्दत्तं प्रगृह्णात्यहो
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ २९ ॥

या भक्तोत्तमचेतसश्चपलतां हन्त्री कुरङ्गेक्षणा
चित्रं कामरिपोर्मनश्चपलतां दात्री स्वरूपेण च ।
मोहं हन्ति नतस्य मन्दहसितैर्मोहं विधत्ते विभो-
स्तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ ३० ॥

यस्याः पद्मदलायताक्षिकरुणापात्राणि वाण्यादय-
स्तत्तत्कार्यपरा भवन्ति कृतिनो ब्रह्मेन्द्ररुद्रादयः ।
यस्याः पादसरोजसेवनपरा नन्दन्त्यहो सिद्धय-
स्तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ ३१ ॥

दिव्यश्रीचरणारविन्दविगलत्पीयूषसर्पिः प्लुतं
ज्ञानाग्नौ सुमनःस्रुचा जडमिदं दृश्यं तपःसंस्कृतम् ।
यस्यै भक्तिसतीसमन्वितबुधा जुह्वत्यजस्रं परं
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ ३२ ॥

या शृङ्गाररसोपदेशनगुरुः श्रीकामजेतुः सदा
कारुण्यामृतवृष्टिपूर्णजलमुक् श्रीनीलकण्ठप्रिया ।
पञ्चेषोर्विजयश्रियो ध्वजपटी या शान्तिसीमानटी
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ ३३ ॥

विद्योद्यानमरालिका परशिवोत्सङ्गोल्लसच्छारिका
मेनापुण्यसुपञ्जराश्रितशुकी कात्यायनी याम्बिका ।
श्रीपाण्ड्येश्वरकीर्तिकल्पलतिका काञ्चीपुरीनायिका
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ ३४ ॥

लोकानां परमौषधं भवगदध्वंसाय विद्याप्तये
मूकानाममृताब्धिवीचिकवितापाण्डित्यसीमाप्तये ।
निस्त्रैगुण्यपरात्परस्य मदनोद्रेकाय चित्रं च या
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ ३५ ॥

नित्यैश्वर्यवती महागुणवती सत्पुत्रसंपद्वती
सत्सौभाग्यवती पतिप्रियवती प्राज्ञेश्वरी पार्वती ।
सत्सौन्दर्यवती शिवव्रतवती साध्वी च या शाश्वती
तां नौमि त्रिपुरां परापरमयीं स्वानन्दसंवित्तये ॥ ३६ ॥

**षट्त्रिंशन्नवमल्लिका**स्रजमिमां त्यागेशपादार्पितां
प्रज्ञासूत्रसुगुम्फितां गुरुकृपानन्दामृताप्लाविताम् ।
यो धत्ते हृदि मूर्ध्नि निश्चलधिया श्रोत्रेण वाचाथवा
तस्मै दास्यति देवता शिवपदं सत्पुत्रसंपत्सुखम् ॥ ३७ ॥

इत्यानन्दनाथपादपद्मोपजीविना काश्यपगोत्रोत्पन्नेनान्ध्रेण त्यागराजनाम्ना
विरचितः षट्त्रिंशन्नवमल्लिकास्तवः संपूर्णः

## २५. संविच्छतकम्[1]

त्यागराजविरचितम्

यस्या नित्यं चरणकमलद्वन्द्वमैश्वर्यबीजं
प्रध्यायन्तो हृदयकमले पुण्यभाजो मुनीन्द्राः ।
निर्द्वन्द्वं तत् समरसमहो प्राप्य तिष्ठन्ति तस्मिन्
तस्यै देव्यै तपनरुचये तत्त्वतोऽस्तु प्रणामः ॥ १ ॥

या कल्याणगुणप्रसूः परशिवानन्दामृतस्यन्दिनी
भूमानन्दमयी परापरमयी तेजोमयी वाङ्मयी ।
आद्यन्तार्णतनूः शिवादिवसुधान्तान्तःप्रकाशात्मिका
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ २ ॥

यस्यां प्रोतमिदं चतुर्दशजगत् सूत्रे मणिस्तोमवद्
यस्यां भाति जडं जडेतरमिदं स्तम्भादिवद् दारुणि ।
यस्यां पश्यति विश्वमज्ञहृदयाः स्थाणौ पुमांसं यथा
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ३ ॥

मूलौड्याणगलोपरोधनमहामुद्राप्रसन्ना परा
तेजःपुञ्जमयी सदा गतियुता हंसी सहस्रारकम् ।
अम्भोजं परहंसकेलिसदनं या प्राप्य लेभे मुदं
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ४ ॥

प्राणापानरवीन्दुयोगपरमानन्दप्रबुद्धा सती
संसुप्ता श्रुतिपत्रपद्मशयने सौषुम्नवीथ्याद्युतम् ।

[1] See note on the *Āryāpañcadaśīstotra* on page 98 above.

वर्षत्यभ्रसभानटं समरसानन्दामृतं प्राप्य या
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ५ ॥

या मित्रावरुणालयात् समुदिता तेजोमयी वल्लरी
वीणादण्डतरुश्रिता शिववियद्यान्ती स्वभावात् सदा ।
नानावर्णपदादिपुष्पनिचयान् स्वस्मिन् किरन्तीच्छया
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ६ ॥

या चैकोत्तरखादिपञ्चकगुणाकारार्णमन्त्रात्मिका
या पीतारुणशुभ्रविग्रहमयी संध्यात्रये राजते ।
याप्येकाक्षरनादसंततिसुखोद्बोधैकमूर्तिः परा
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ७ ॥

याव्यक्ता नववारनाथकरुणापाङ्गा प्रकाशात्मिका
नीलेन्दीवरपद्महर्षकरहृत्तत्त्वार्णमुक्तावलिः ।
कामेश्यादिसुधांशुषोडशकलापूर्णात्मवक्त्राम्बुजा
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ८ ॥

या सीमा नवखण्डचक्रवसुधालंकारमेरोः परा
नानादेशिकयोगिनीमणिलसच्छुभ्रादिवर्णावनेः ।
कामेशाङ्कनिरभ्रनिर्मलमहाकाशस्थविद्युल्लता
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ९ ॥

यस्याः प्रीतिरहर्निशं कुलगिरिस्रोतःसुधायां परा
निष्कामप्रणतान्तरङ्गकुसुमे ह्रींकारघण्टाध्वनौ ।
गन्धेऽहं शिव एव नान्य इति यो दीपे विमर्शात्मके
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ १० ॥

या चित्रं त्रिपुरा पुरान्तकसमाश्लिष्टा परा ज्योतिषाम्
अद्वैतापि शिवार्धमूर्तिरमला पाशापहा पाशिनी ।
पद्माराध्यपदारविन्दयुगला भिक्षाटनेशप्रिया
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ११ ॥

या दूरा ललितापि दुष्कृतजुषां या कोमलाङ्ग्यद्रिजा
या नीलाम्बुदमेचकापि भुवनं विद्योतयत्यद्भुतम् ।
या कल्याणगुणप्रवाहसुमहावारांनिधिर्निर्गुणा
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ १२ ॥

निष्क्रोधा नतलोकमृत्युमथने या बद्धकच्छा सदा
निर्वैरा निजपूजनादिकृतिनां दैन्ये द्विषन्त्यद्भुतम् ।
भक्तानां भयमोचिनी भवरता श्रीकामराजात्मिका
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ १३ ॥

विद्यारण्यपुलिन्दिका श्रुतिगिरा तत्त्वोपदेष्ट्री सतां
वाराही नकुली विलासकुतुका याप्युत्तमब्राह्मणी ।
या चित्रं सुखशान्त्यतीतवसुधा श्रीचण्डिका शूलिनी
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ १४ ॥

या शाला निगमागमस्मृतिकलालीलाततेस्त्र्यक्षरी
या फालाक्षमहासती स्मरकलाहेला पराप्यद्भुतम् ।
या कालानलकान्तिमत्यपि सदा नीलालका शीतला
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ १५ ॥

कल्याणाचलकार्मुकस्य महिषी पुण्ड्रेक्षुचापाद्भुतं
लक्ष्मीवल्लभसायकस्य रमणी पुष्पेषुहस्ताम्बुजा ।

या रामा परमेश्वरस्य ललिता लोकत्रयेऽत्यद्भुतं
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ १६ ॥

या वाचामधिदेवताप्यविषया वाचां श्रुतेर्वर्णितुं
श्रोत्रादीन्द्रियदेवतापि न जडैः श्रोत्रादिभिर्ज्ञायते ।
अन्तःस्थामपि यां प्रचोदकतया नो जानते जन्तवः
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ १७ ॥

या वीणा परमेश्वराङ्कनिलया ह्रींकारतन्त्री सदा
श्यामा कालसुमूर्च्छनादिकलनाहीनापि रागिण्यहो ।
नाथेनाहतनादविभ्रमवती स्थाणुं शिवं चाकरोत्
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ १८ ॥

या मोहान्धतमोऽपनोदनविधौ बोधात्मिका कौमुदी
संसारार्णवतारणे दृढतरा नौकेन्द्रचापप्रभा ।
दारिद्र्याद्रिविदारणे कनकरुग् दम्भोलिरिच्छात्मिका
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ १९ ॥

या तापत्रयजाड्यशोकशमने काचिन्नृणां स्वर्धुनी
या शान्त्यादिगुणप्रवालमणिसंवृद्धौ सुधाम्भोनिधिः ।
प्रत्यग्दृष्ट्यसिताब्जपोषणविधौ जाड्यापहा दीर्घिका
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ २० ॥

शोकारण्यकुठारिका शुभफलोद्यानस्य या वापिका
पापक्ष्वेलसुपर्णकल्पवुटिका प्राज्ञाज्ञयोरम्बिका ।
आशोच्चाटनमूलिका विपणिका वागर्थवृद्धेः कवेः
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ २१ ॥

या वाञ्छापरिपूरणे सुरलता मोक्षेन्दिरा देवता
स्रष्टादेः कुलदेवता सुचरिता विद्यासु सर्वोन्नता ।
नित्यानन्दरता सुकर्ममुदिता लोकत्रयाराधिता
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वग ॥ २२ ॥

सारासारपयोविवेचनविधौ हंसी परं तु त्विषा
श्यामा मोहतमोपनोदनविधौ हंसः सदा भासकः ।
प्रज्ञासौधविहारिनिस्तुलमहाज्योत्स्ना दिवापि ध्रुवा
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ २३ ॥

या चिन्तामणिरेव दोषशमने दाने परं त्वद्रिजा
वासन्ती पिकसुन्दरी श्रुतिसुखालापे स्वयं पञ्चमी ।
याने यौवनसिन्धुतीरकरिणी पद्माटवीरक्षिणी
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ २४ ॥

या शंभोर्नयनोत्पलेन्दुवदना कंदर्पदूतीक्षणा
चेतश्चातकनीलनीरदकचाजीवातुसीमन्तिनी ।
शृङ्गाराद्वयशान्तिपाठसुकृतश्रेयःफलाग्र्यस्तनी
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ २५ ॥

या त्र्यक्षस्य मनोरथः किमु तपःपाकः सुखं नैजकं
दक्षस्येव तपःफलं कुलधनं दैवं हिमाद्रेरपि ।
भाग्यं भक्तजनस्य देशिकदृशोः श्लाघ्यं कवीनां गिरां
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ २६ ॥

सेतुर्दुःखमहोदधेर्मणिमयच्छाया विभोस्तत्तरोः
पान्थानां परमार्थिनां प्रतिपदं कारुण्यपाथःप्रपा ।

सत्यानन्दचिदन्नदानविलसच्छाला च कल्याणधीः
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ २७ ॥

या लोकत्रितयैकरत्नमजडं भान्विन्दुभाशीतलं
निर्दोषं गुणवर्जितं च निखिलैश्वर्यप्रदं देहिनाम् ।
चित्रं भिक्षुकसार्वभौमनिलयं लोकत्रये भासते
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ २८ ॥

यापर्णाप्यनपायकल्पलतिका स्थाणुः पतिः कल्पको
यस्या भक्तफलप्रपूरणविधौ पुत्रो विशाखोऽद्भुतम् ।
इत्थं नित्यकुटुम्बिनी त्रिजगतां रक्षाकरी राजते
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ २९ ॥

या पुण्याश्रम एव शांकरतपःसिद्ध्यै महायोगिनां
निर्वैरो गजपञ्चवक्त्रगतिमध्यः शान्तिरङ्गस्थलम् ।
निर्द्वन्द्वस्तनचक्रवाकलसितः कोकारिचूडामणिः
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ३० ॥

या केदारममूल्यमानमभयं निष्पङ्कमाशास्पदं
श्रीकण्ठेतरभोगबन्धरहितं कल्पे कदाप्यद्भुतम् ।
प्रज्ञाशालिन एव दित्सति बत ज्ञानाङ्कुरं कस्यचित्
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ३१ ॥

या चित्रं करिणी हिमाचलभवा ताम्रारविन्देक्षणा
कान्त्या भर्त्सयती वरं मरतकं पाशाङ्कुशेक्ष्वन्विता ।
पञ्चास्यप्रभुमञ्चकोपरि वसत्यानन्दपुर्यां मुदा
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ३२ ॥

एणाङ्कार्भकमात्मकुन्तलतमोराज्यामपि द्योतय-
त्याश्चर्यं यमिनां कटाक्षयमुनाकल्लोलमालां च या ।
नित्यं वक्त्रशशाङ्कमन्दहसितज्योत्स्नां कृपायां गुरोः
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ३३ ॥

या दृष्टिः श्रुतिमूलशीलनपरा नीलाञ्जनाद्रिश्रियं
स्वात्मस्मेरपयोदधौ सहभवं श्रीवल्लभं तन्वती ।
वात्सल्यान्नतलोकमोहतिमिरं चित्रं धुनीते च या
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ३४ ॥

या कारुण्यकटाक्षनीलवनजद्रूष्यात्मजाम्भःस्वहो
मुग्धस्निग्धमृदुस्मितामरधुनीवीचीविलासाश्रिते ।
सुस्नातं निजपादपङ्कजरजःसिक्तं बत व्यातनोत्
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ३५ ॥

श्रीकण्ठार्धशरीरिणी ध्रुवमपि श्रीकान्तसोदर्यहो
नारायण्यपि सर्वदा कुलनगोत्तंसात्मजात्यद्भुतम् ।
प्रालेयाचलकन्यकापि सकलाहंरूपिणी याद्भुतम्
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ३६ ॥

आनङ्गस्मृतिसंप्रदायमखिलं स्वापाङ्गशिष्येण या
कामद्रोहिणमेव शिक्षयति हा लोकोत्तरात्यद्भुतम् ।
तेनैवात्मपदारविन्दरसपानोत्कं त्रिलोकेऽन्यथा
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ३७ ॥

बन्धूकस्तबकं रुचा परिहसत्यम्भोजमप्यद्भुतं
कर्णास्येक्षणपाणिना वनचरं मध्येन वक्षोरुहा ।

गत्या स्वादुगिरा सुधाकरकलोत्तंसैश्च नीलालकैः
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ३८ ॥

निःस्पन्दं निगमागमाद्यविषयं श्रोत्रादिहीनं परं
निःशब्दं तदहो पुमांसमकरोत् कामेश इत्याख्यया ।
या चित्रं निजदासमच्छहृदयं शक्त्या तनोत्यन्यथा
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ३९ ॥

वागर्थेन यथा युतापि परमानन्दात्मना शूलिना
नित्यं या विहरत्यहो जनमनोगेहेषु मुग्धेषु हा ।
निर्भीता कुलटेव कर्म कुरुते सर्वेन्द्रियाणां सदा
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ४० ॥

नासामौक्तिकदैत्यदेशिकमहो मन्दस्मितैः पुष्णती
ताटङ्कद्युतिभिर्दिनेशशशिनौ देवौ तिरस्कुर्वती ।
मारारेर्गृहमेधिनी मनसिजं रक्षत्यपाङ्गोटजे
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ४१ ॥

बन्धच्छेदविचक्षणा पशुजनस्तोमातिदूराद्भुतं
या रक्षत्यगराजशेखरसुताप्याम्नायसूत्रैर्दृढम् ।
बद्ध्वा देवपशून् सदा पशुपतेः संसर्गदोषेण हा
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ४२ ॥

धारा देशिकदिव्यदृष्टिमधुनो मारारिनेत्रामृतं
धारा दुर्मतदारुदारिपरशोस्तारावलिर्योगिनाम् ।
तीरं मन्त्रमहोदधेः कविगिरां पूरः सुखाम्भोनिधेः
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ४३ ॥

कामाक्षीति वदन्ति केचन बुधाः कामेश्वरीत्यद्भुतं
रामास्तोमशिरोमणीति मदनारातेर्दृशोः पारणा ।
सीमा भूमसुखस्य चिन्मयकला शृङ्गारमूर्तिश्च या
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ४४ ॥

मुग्धस्निग्धकटाक्षमित्रतनया यस्याः सदानन्दिनी
मन्दस्मेरपयोनिधिं निजपतिं संगम्य वाणीश्रियः ।
संसूय प्रददात्ययाचिततया भक्तेभ्य एवादरात्
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ४५ ॥

औन्नत्यं मुहुरेति चित्रममरश्रेणीषु यद्योगतो
दक्षद्वेष्यपि भिक्षुकोऽपि विषमाक्षोऽप्युक्षयानोऽपि वा ।
अज्ञातान्वयसंभवोऽपि निगमातीतोऽपि लुब्धस्तथा
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ४६ ॥

या लोकैकसुमङ्गला स्मरकला नीलाम्बुदश्यामला
डोला शंकरलोचनद्वयशिशोर्मालाष्टसिद्धिश्रियाम् ।
कालातीतकला कलानिधिकलोत्तंसातुला निर्मला
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ४७ ॥

अस्तं या नलिनेक्षणेन नयति क्षोभातपं योगिनां
स्वानन्दामृतचन्द्रिकां करुणया नित्यं तनोत्यद्भुतम् ।
वर्षत्याननपङ्कजे सुकवितापीयूषधाराः कवेः
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ४८ ॥

या विद्युत्कमलेषु तिष्ठति परा तापिञ्छगुच्छच्छवि-
श्चित्रं प्राणभृतां दृशोः सुखकरी भीमप्रकाशिन्यलम् ।

ज्योतिः शीतलभूभृतस्त्रिभुवनक्षेमप्रवाहप्रदा
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ४९ ॥

या काचिद्धरिणी मरालगमना चिद्व्योमसंचारिणी
ह्रींकारस्वनसंततेः परवशा हृद्यानवद्या दृशाम् ।
अस्त्रैर्व्याधवरं पिनाकिनमहो संमोहयन्त्यन्वहं
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ५० ॥

धेनुर्या परमात्मनः पशुपतेः सर्वज्ञतादोहिनी
चित्रं षण्मुखवक्रतुण्डजननी प्रालेयशैलात्मजा ।
निर्निद्रामलपुण्डरीकनयना शुभ्रांशुचूडामणिः
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ५१ ॥

यां दण्डं वरविद्रुमात्मकमतिश्लक्ष्णं सुसूक्ष्मं ध्रुवं
गाढं निर्विषयाः पुराणपुरुषा आलम्ब्य गच्छन्त्यहो ।
तीर्त्वा दुस्तरजन्मपङ्कनिबिडं मायामहीमण्डलं
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ५२ ॥

या कुम्भोद्भव एव मन्मथरिपोर्धैर्याम्बुधेः प्राशने
प्रारब्धात्मकविन्ध्यभूधरगतिध्वंसे तथा धीमताम् ।
आचार्यः शिवबोधने निजपतेरानङ्गदीक्षाक्रमे
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ५३ ॥

या क्षीराब्धिसहोदरस्मितरुचा कम्बुं तिरस्कुर्वती
कामारेर्हृदयं विशुद्धमपि संमुग्धं करोत्यन्वहम् ।
आश्चर्यं नमतां धुनोति तिमिरं स्वाज्ञानरूपं परं
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ५४ ॥

यस्या हासमरालिकामृदुगतिः श्रीकामजेत्रे मुदा
विद्यां बोधयितुं परां वितनुतेऽपाङ्गार्कजातोर्मिषु ।
स्थित्वा श्रौतपथस्थकुण्डलयुगेनालोचनासंततं
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ५५ ॥

यस्या वीक्षणशक्रमेचकमणीसाम्राज्यसिंहासनं
श्रित्वा पुष्पशरप्रभुर्विजयते त्र्यक्षस्य पार्श्वेऽद्भुतम् ।
पीयूषार्णवफेनजेतृहसितश्रीचामरासेवितः
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ५६ ॥

नीहाराद्रियशोऽभिवर्धनपरे कुञ्जे कटाक्षात्मके
यस्याः क्रीडति नीलकण्ठविमलप्रज्ञामयूरार्भकः ।
पश्यन् नित्यसुगन्धिकुन्तलमयीं कादम्बिनीं संततं
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ५७ ॥

या हासार्जुनभूभृता सुखयति द्राग् भीमचित्तं परं
धर्मं पालयति प्रवेशयति वैवर्णेऽनुकूलां गतिम् ।
मालिन्यं नयतेतरां ध्रुवमहो तद्धार्तराष्ट्रं कुलं
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ५८ ॥

या मुक्ताफलमद्भुतं गिरिभवं श्यामं प्रकाशास्पदं
सत्सूत्रं सकलार्थदं शशिकलाचूडं त्रिणेत्रं चरम् ।
निर्दोषं भवकौतुकप्रदमनाद्यन्तं परं निस्तुलं
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ५९ ॥

या वापी भुवनप्रदा रसमयी तृष्णार्दितानां परं
निष्पाशाभिगताभिमानममतापाशाभिलाषान्विता ।

सत्पात्रे फलदायिनी स्मृतिमतां तापत्रयध्वंसिनी
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ६० ॥

शृङ्गाराम्बुधिवीचिविभ्रमवती शृङ्गारबीजानिल-
व्यालोला कुमुदप्रियध्वजपटी प्रत्यक्चरी पार्वती ।
द्रोणी या विषमेक्षणानुसरणी चित्रं सदा राजते
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ६१ ॥

यस्या नीरदभाः कटाक्षयदुपः कर्णानुवृत्तोऽद्भुतं
दीव्यत्कुण्डलहासचक्रजलजश्लिष्टः कृपानीरदः ।
स्थाणोर्गोकुलमन्वहं नयति तद्वक्षोजशैलान्तरं
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ६२ ॥

या चित्रं महतीं महागुणवतीमप्याश्रितं संततं
काठिन्यं न विमुञ्चति स्तनयुगं मान्द्यं गतिः कुन्तलाः ।
कौटिल्यं नयनाम्बुजं चपलतां बिम्बाधरो रागितां
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ६३ ॥

या मन्दस्मितकौमुदीं वितनुते नित्योदिते सर्वत-
स्ताटङ्कात्मनि भास्करे स्वयमहो कालाम्बुदश्यामला ।
बिम्बोष्ठद्युतिसंध्यया द्विजगणे श्रीशांभवे रागितां
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ६४ ॥

जारे मारकिरातजीवनकरे चित्रं कटाक्षात्मके
यस्याः कुण्डलरश्मिवेणुकलिते लग्ना सुखं राजते ।
कामारेर्मतिशारिका श्रुतिशिरोद्यानान्तरोल्लासिनी
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ६५ ॥

नित्यं सोमकलाधरोऽध्वरपतिर्व्याघ्राजिनालंकृत-
स्ताटङ्कद्युतिवह्निवीक्षणशिखाधूमातिलोलेक्षणः ।
यस्या हासपयोनिधाववभृथव्याजेन मज्जत्यहो
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ६६ ॥

यस्याः कापि दयात्मिका प्रतिदिनं शैलूषबालाद्भुतं
नीरागालयकालवर्जितवती निर्मूर्च्छना कामना ।
निर्लज्जेव दिगम्बरा नटति हा संमोहशान्त्यै नृणां
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ६७ ॥

माङ्गल्यं हरिनीलकान्तिसुगुणं श्लाघ्यं सुरस्त्रीजनै-
र्यस्या मञ्जुलवीक्षणं स्मरमहाराजस्य देव्या रतेः ।
ओष्ठश्रीर्वरकुङ्कुमं स्मितमहो लज्जाधवी शाश्वती
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ६८ ॥

चित्रं कापि सुधा शिवेतरसुरालभ्या हिमाद्र्युद्भवा
द्रुह्यन्ती कुरुविन्दमात्मरुचिभिर्दोषाकरोत्तंसिनी
आस्ते या मदनज्वरं शशिभृतः संधुक्षयन्त्यन्वहं
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ६९ ॥

अर्धं राज्यमनन्यसाध्यमखिलैश्वर्यप्रदं शूलिनः
शुद्धं मूर्तिमयं ययातिविनयैः प्राप्तं तदन्यत् पुनः ।
य्याप्तुं वाञ्छति गारुडोपलवपुः कान्त्या महत्या परं
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ७० ॥

अर्धं सोमकलाधरी शशिकलाचूडस्य या त्र्यम्बक-
स्त्र्यक्षाया अथवा सनातनतनू जायापती शाश्वतौ ।

एकं वेत्यवधारितुं मुनिवरा अद्याप्यलं नाद्भुतं
        सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ७१ ॥

दारिद्र्यास्तधराधरोऽपि परमं भद्रोदयोऽत्यद्भुतं
        पापारण्यदवानलोऽपि नमतां कारुण्यधाराधरः ।
या दुःखाम्बुदमालिकापवनराण्नैश्चल्यरूपास्ति वै
        सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ७२ ॥

श्रौतं मार्गमतीत्य गच्छति मुदा कापालिकं दृक् परं
        मध्यः शून्यमतं गतोऽतिविमले द्वन्द्वे कुचौ द्वैतिनौ ।
सौरे कुण्डलयुग्ममात्मरुचिभिर्यस्याः कृपा शांभवे
        सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ७३ ॥

वल्ली कापि शिवाङ्गणे लसति या मन्दस्मितैः पुष्पिता
        ताम्बूलेन सुगन्धिता सुफलिता वक्षोरुहाभ्यां परम् ।
कान्त्या पल्लविता कचैर्भ्रमरिता दृग्भ्यां परं पत्रिता
        सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ७४ ॥

यस्या वीक्षणदेशिकः श्रुतिगतिस्तेजोमयः सर्ववित्
        संतुष्टो जितकामशत्रुरणिमाद्यष्टाभिराराधिता ।
सच्चित्सौख्यरतः शिवं नटमपि क्षिप्रं करोत्यद्भुतं
        सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ७५ ॥

यस्याश्चारुकपोलदर्पणतले दृष्ट्वा कपर्दी रुषा
        भीतो जह्नुसुतां मृदुस्मितमयीं संकेतमित्थं व्यधात् ।
मुग्धे गच्छ निजस्थलं द्रुततरं जागर्ति दृष्टिर्यतः
        सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ७६ ॥

शृङ्गारैकरसं वसन्तसुहृदं कंदर्पदर्पप्रदं
चित्रं कोकनदप्रबोधनकरं चन्द्रोदयं श्रीकरम् ।
यस्या हासमयं निषेव्य चिरमप्यास्ते पुराणः शिवः
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ७७ ॥

या काचित् पिककामिनी श्रुतिगतिः सप्तस्वरालापिनी
नित्यं माधवबोधिनी त्रिभुवने निष्पक्षपाता सुखम् ।
चित्रं चूतनवप्रसूनविशिखद्वेष्याश्रये राजते
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ७८ ॥

यस्या वीक्षणमान्त्रिकः सुकृतिनामग्रेसरः शंकरी-
मन्त्राम्भोनिधिपारगः स्मितविभूत्योच्चालयन् सर्वदा ।
द्वेषं शंकरकर्तृकं सुमशरे विभ्राजते शाश्वतः
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ७९ ॥

यस्या दृग्रमणीमणिर्विवदते कामारिसल्लापने
स्वाधीनप्रियया मृदुस्मितशरीरिण्या परं गङ्गया ।
आद्याहंश्रुतिमूलगाधरभवा त्वं स्वीकृतेति ध्रुवं
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ८० ॥

या काचिद् भुजगी सदा सरलगा पीयूषदायिन्यहो
पद्मारण्यविहारिणी श्रुतिमती तेजस्तनूर्निर्भया ।
जन्माब्धिप्लववर्धिनी वशयति श्रीनीलकण्ठं दृशा
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ८१ ॥

आस्याम्भोजभवा पतिं निजमनाद्यन्तं कटाक्षात्मकं
पृच्छन्तीति पयोनिधेः स्मितमयान्मज्जन्म किं वाम्बुजात् ।

यस्या निःस्मरसंपदं सुधनिकं कर्तुं शिवं काङ्क्षते
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ८२ ॥

यस्याः पाणिपरिग्रहे मृदुतनोर्हेमाद्रिधन्वा शिवः
पादन्यासविधौ दृषद्यपि सुरस्त्रीणां पुरो लज्जितः ।
मन्दाक्षं गतवाननङ्गकलिकां यां वीक्षितुं नाद्भुतं
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ८३ ॥

यस्याः पादकुशेशयश्रियमहो श्रुत्वानिलादन्वहं
गाङ्गान्यम्बुरुहाणि हन्त कतिचित् प्राप्तुं परां तां द्रुतम् ।
पीत्वा क्षीरलवं तपन्ति तपनं पश्यन्ति मज्जन्त्यलं
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ८४ ॥

नित्यं संधिमपेक्षते सुचरिता दूती कटाक्षात्मिका
राजस्थावररामयापि न तया गर्भे वहन्त्यामृतम् ।
कामारे रतिसात्त्विकद्विजमणेर्मोदाय सुश्रेयसे
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ८५ ॥

पक्षे शैवमनोमहीभृति मनोजाग्निं ध्रुवं साधयन्
यस्या मञ्जुकटाक्षधूमशिशुना श्रौतेन सद्धेतुना ।
ओष्ठद्वन्द्वसभान्तरे स्मितमयो नैयायिको भासते
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ८६ ॥

या पद्मं हिमशैलजं मरतकं भासा भृशं भर्त्सयत्
कंदर्पस्य जयेन्दिराजनिगृहं निर्हेतुकोत्फुल्लनम् ।
स्थाणोर्लोचनभृङ्गसंभ्रमकरं शीतांशुलेखाङ्कितं
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ८७ ॥

यस्या मन्दगतिः परं शुभगतिः कामस्य कामद्रुहः
कामोद्रेकगतिश्चिरं भजनकृद्धंसाङ्गनासंततेः ।
कामं दत्तगतिः सदा विजयते हंसात्मिका योगिनां
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ८८ ॥

निःस्नेहापि शिवातिरागकलिता या दीपिका काप्यहो
झञ्झामारुतभीतिदापि चपला निष्कल्मषा साञ्जना ।
त्रैलोक्येऽपि विराजते श्रितवती श्रीशंकराङ्कं ध्रुवं
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ८९ ॥

निर्यत्नैव महासती सुचरिता या शैलराजात्मजा
नाथं लोकविलक्षणं प्रहृतवत्यद्यापि सेवाजने ।
गाण्डीवेन वराश्मभिश्च मुसलेनोपानहा वर्तते
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ९० ॥

यस्याः पादकिसालयप्रभुवरं याचन्त्यजस्रं परं
कस्तूर्यः सुरयोषितां तिलकिताः सद्वासनां रागिताम् ।
बिम्बोष्ठं मृदुतां श्रियं च युगपद्धस्ताः प्रवालप्रियाः
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ९१ ॥

यस्याः पादसहस्ररश्मिरचलं कामारिचित्तात्मकं
हैमं भ्रामयति प्रणाशयति संतापं सतामङ्कुरम् ।
प्रज्ञानात्मकमद्भुतं शिशिरयत्यक्षीण्यलं पश्यतां
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ९२ ॥

चित्रं या कुरुते मनोऽपि यमिनां बद्धं महायत्नतो
मुक्तं शोणपदारविन्दयुगले नीरागिणं रागिणम् ।

मञ्जीरस्वनमन्मथस्मितरवैः संमोहनं शूलिनः
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ९३ ॥

पादाम्भोजरजो रजांसि हरति प्रौढानि यस्या नृणां
सत्त्वं वर्धयति प्रदर्शयति सन्मार्गं सुराणामपि ।
जन्मव्याधिमृतिप्रवाहमतुलं संरोधयत्यद्भुतं
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ९४ ॥

नाहं विश्वमिदं चराचरमयं मायाविलासास्पदं
दृश्यत्वादिति शोधयन्ति सुधियः सर्वं यया प्रज्ञया ।
आत्मैवायमिदं वदन्ति च पुनस्तूष्णींभवन्तः स्थिताः
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ९५ ॥

राहुं निन्दति चन्द्रचूडचिकुरैस्ताटङ्ककान्त्या रविं
वक्त्राब्जेन विधुं गुरुं नतगिरा सौम्यं दृशा भद्रया ।
गत्या मन्दमहो कुजं तनुरुचा नासाग्रमण्या कविं
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ९६ ॥

निःश्रेणी कृतिनां परामृतफलप्राप्तौ प्रवालद्युति-
र्या नीलाञ्जनमक्षरात्मकनिधेः संदर्शने श्रीमताम् ।
नित्यानन्दरसा परोक्षकरणे श्रीदेशिकश्रीकृपा
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ९७ ॥

या कुण्ठीकुरुते निजस्तुतिविधौ गर्वात् प्रवृत्तां गिरं
वेदानामपि गीष्पतेरपि महाभाष्यार्थविज्ञानिनः ।
दत्ते वाग्भववैभवामृतझरीं मूकाज्ञयोर्वाग्मितां
सा संवित् सुकृतोदया स्फुरतु नश्चित्ते सदा सर्वगा ॥ ९८ ॥

आद्यामम्बुरुहेक्षणामनुपमामापीनतुङ्गस्तनी-
मार्यामागमसारमूर्तिमरुणामानन्दचन्द्राननाम् ।
साध्वीं सत्कविवाग्झरीं समरसानन्दामृतस्यन्दिनीं
ध्यायन्त्यात्मनि सर्वपाशगलिताः संविन्मयीं नौमि ताम् ॥९९॥

गुरुचरणसरोजं गुप्तगङ्गातरङ्ग-
स्तिमितममितशुक्लज्योतिषां ज्योतिरेकम् ।
निरुपममकरन्दस्पन्दमानन्दकन्दं
निधनजननहीनो निर्मलोऽहं निषेवे ॥ १०० ॥

शार्दूलवृत्तमपि साधु भवत्यहो तत
सारस्वतं समरसामृतलोचनानाम् ।
सद्यो जयत्यघरिपुं श्रुतिमार्गयोगात्
त्यागेशसान्द्रकरुणाद्भुतमेव भद्रम् ॥ १०१ ॥

इत्यानन्दनाथपादपद्मोपजीविना काश्यपगोत्रोत्पन्नेनान्ध्रेण
त्यागराजनाम्ना विरचितं संविच्छतकं संपूर्णम्

---

## २६. आर्येशस्तवः[1]

वारणदनुजविपक्षं विरचितविनतौघविघ्नविच्छेदम् ।
वेतण्डतुण्डमाद्यं विगलन्मदगण्डमण्डलं वन्दे ॥

[1] Based on a recent transcript, No. TR 350 (D. C. No. 736), the original of which belongs to Sri Doraiswami Sastri of Kalpattu village, South Arcot Dist. There are a few lacunas in the MS.

अतुलिततुन्दिलविग्रहमनर्घतुहिनांशुशकलशेखरितम् ।
अमलैकरदमनोहरमविरतमाकण्ठकरिणमहमीडे ॥ [1]

स जयति सुमेरुधन्वा समस्तसुरसेव्यपादपाथोजः ।
सुन्दरसुधांशुकलिकाशोभितमकुटः सदाशिवो देवः ॥ १ ॥

तस्य हि देवस्य परं महतो महिमानमतिमनोवाचम् ।
श्रुतिरपि निगदितुमनलं का शक्तिर्भवति मादृगर्वाचाम् ॥ २ ॥

तदमितमहिमवतो मां तथाप्यनर्घाः प्रचोदयन्ति गुणाः ।
तदमुष्य नवनकरणे यथामनीषं यतेऽहमीशस्य ॥ ३ ॥

कुण्डलि[मण्डि]तमूर्तिः काकोलास्वादशमितजगदार्तिः ।
कलितनतेहितपूर्तिः कलयतु कुशलं प्रभग्नपुरकीर्तिः ॥ ४ ॥

मदयुतमहोक्षयानं मन्दरविकटतटकन्दरशयानम् ।
मकुटतटघटितशशिनं मदनारातिं भजेऽनिशं[2] वशिनम् ॥ ५ ॥

शिक्षितविपक्षदक्षः शिरसा सुरसिन्धुधारणे दक्षः ।
शितभसितौघवलक्षः सोऽयं भूयात् सुखाय निटिलाक्षः ॥ ६ ॥

करधृतकुरङ्गवर्यः कमलाक्षाकलितबहुविधसपर्यः ।
कार्मुककनकाहार्यः कुशलं दिशताद् रथाङ्गशशिसूर्यः ॥ ७ ॥

परिकरफणिगणमकुटीमणिवरपटलीमयूखपिहिताशः ।
पाणिपयोजविराजत्पिनाकपरशुः स पातु सर्वज्ञः ॥ ८ ॥

[1] First two verses are not numbered in the MS.
[2] विळं—MS.

लम्बितभुजङ्गहारं ललाटतटचुम्बिलोचनोदारम् ।
लसतु महो हृदि वारं लाञ्छितमकुटाग्रकुमुदिनीजारम् ॥ ९ ॥

मृगधरमणिवरचूडं मञ्जुलसुरसिन्धुमालिकापीडम् ।
मर्दितनतजनिपीडं महीध्रवरशिखरविरचितक्रीडम् ॥ १० ॥

दरहसितरुचिररदनं दलितसरोजातसहजसद्वदनम् ।
दिव्यमहोभरसदनं दृगग्निनिर्दग्धदर्पभृन्मदनम् ॥ ११ ॥

मिहिरजमरणदचरणं मनोज्ञकैलासगिरिवराभरणम् ।
मामकमनसि विहरणं महस्तनोतु प्रपन्नजनशरणम् ॥ १२ ॥

निगमशिरःस्थितिभाजं निशाकरस्पर्धिनिजमुखाम्भोजम् ।
निर्मितिभृतिहृतिबीजं निखिलस्याद्यं नमामि जगतोऽजम् ॥ १३ ॥

नतकृतकारुण्यरसं नखमुखनिर्भिन्नविश्वसृट्शिरसम् ।
नरवाहनरचितरसं नवास्थिमालाकलापलसदुरसम् ॥ १४ ॥

वटतरु[वरमूल]जुषं वरमुनिसंदोहविमलबोधपुषम् ।
विदधे दक्षिणवपुषं विषयं भजनस्य भूरिमोहमुषम् ॥ १५ ॥

कबलितगलधृतगरलः कर्ता पायादपारमहिमा विरलः ।
कलितोपासनसरलः करुणाजलधिः कटाक्षवीचीतरलः ॥ १६ ॥

कमलजमौल्यवसानं कलये गिरिशं करीन्द्रचर्म वसानम् ।
काम्यवरान् प्रददानं कलिततपोभ्यः किरातमुक्तिनिदानम् ॥ १७ ॥

व्यवहितसत्त्वोन्मेषं विमूढजनवञ्चनात्ततामसवेषम् ।
कलयेऽस्ताखिलदोषं कृतयमबिभ्यन्मृकण्डुतनुभवपोषम् ॥ १८ ॥

विष्णुगवेषितचरणं विरिञ्चिकृतमूर्धमार्गणाचरणम् ।
विकटजटाभरभरणं विलसत्कैलासशिखरविस्फुरणम् ॥ १९ ॥

संभृतसुमेरुधनुषं सव्यशरीरार्धशैलपतिजनुषम् ।
स्वीकृतकिरातवपुषं स्वसेवनासक्तसव्यसाचिपुषम् ॥ २० ॥

गलविगलद्गरलघृणिश्यामलनलिनस्रगुज्ज्वलोरस्कम् ।
मुखशशिरिङ्खत्स्मितरुक्सुखिताचलदुहितृलोचनचकोरम् ॥ २१ ॥

सारससगन्धवदनः सततस्थितिपूतपितृवनीसदनः ।
सस्मितसुन्दररदनः सोऽवतु संवर्तकृतजगत्कदनः ॥ २२ ॥

सवितृशशिदहननयनः साधितविनमद्वराभयानयनः ।
संभृतहिमगिरिशयनः स्वभजनसज्जन्मुमुक्षुमुक्त्ययनः ॥ २३ ॥

दृप्यद्द्रुहिणमुखाब्जद्रुह्यत्खरनखरखण्डचन्द्रमसम् ।
दुर्मददक्षक्षपणप्रचण्डभुजदण्डवीरभद्रभटम् ॥ २४ ॥

निर्जितजगदवनीतं निगमशिरःक्षीरनीरनिधिनवनीतम् ।
हृदि श्यमिभिर्जवनीतं हरं भजे रजतशैलकल्पवनीतम् ॥ २५ ॥

सरसिजसनाभिनयनं सुधांशुसच्छात्रवदनकमनीयम् ।
कुन्दसगन्धरदालिं कोकनदश्रेणिसहचरच्चरणम् ॥ २६ ॥

स्मितशिशुहंसोत्तंसं लोचनलोलम्बसंभृतोल्लासम् ।
श्यामलकलगलनालं वन्दे तव देव वदनकोकनदम् ॥ २७ ॥[1]

भृकुटिभटब्रह्माणं कटाक्षकैंकर्यपरवशद्युपतिम् ।
पदपरिचारकलेखं रसनाचलनप्रतीक्षपद्माक्षम् ॥ २८ ॥

[1] This verse is repeated; see verse 71 below.

विकटहरिद्रूपपटं निकटतटाटत्प्रभूतभूतघटम् ।
उद्भटभैरवपुटमटमुत्कटनटनं नमामि कपटनटम् ॥ २९ ॥

अमितनरबोधजलनिधिरपरिमितैश्वर्यशेवधिः सततम् ।
अवतु हरनामकं मामस्तमितोत्पत्तिवृद्धिहानि महः ॥ ३० ॥

पातु स मां परमेशः पृथ्वीधरचापरोपरूपरमेशः ।
सव्यतनौ रमणी यं श्लिष्यति शोणा सितांशुभररमणीयम् ॥ ३१ ॥

अखिलैरदृश्यकोशोऽप्यभ्रसरिद्दृष्टनिजजटाजूटः ।
हर्यनिरीक्ष्यपदाब्जोऽप्यन्तकहृदयेक्षिताङ्घ्रिसरसिरुहः ॥ ३२ ॥

व्याघपदविषयमौलिर्विधातृदुर्दर्शमस्तकोऽपि परम् ।
भृशतरममूर्तरूपोऽप्यवनतसेवार्थमष्टमूर्तिधरम् ॥ ३३ ॥

वचसामगोचरोऽपि हि वेदान्तवचःपरंपराविषयः ।
एकोऽपि नैकरूपो व्याप्नोति परः शिवोऽखिलं लोकम् ॥ ३४ ॥

गजमुखजनकाय नमो गिरिजाक्षीन्दीवरेन्दुबिम्बाय (नमः) ।
अखिलनिदानाय नमोऽस्त्वनन्तकल्याणगुणनिधानाय (नमः) ॥ ३५ ॥

असदृशविभवाय नमोऽस्त्वचिन्त्यसच्चित्सुखस्वरूपाय (नमः) ।
प्रकटिततत्त्वाय नमः प्रणवाक्षरपञ्जराच्छकीराय (नमः) ॥ ३६ ॥

प्रमुषितमोहाय नमः पृथ्वीधरदुहितृपुण्यपाकाय (नमः) ।
आश्रितमुक्ताय नमोऽस्त्वविकलकैवल्यदानदक्षाय (नमः) ॥ ३७ ॥

फणिपतिभूषणमूर्तिर्विनायकाक्रान्तपरिसरः सततम् ।
श्यामतरकंधराभस्त्वमेव साक्षाच्छिवाच्युतो भवसि ॥ ३८ ॥

शुचिशशि[सप्तह]याक्षं शोभनकरचारुशेखरतराब्जम् ।
साधु वृषाकपिमीडे सोत्कण्ठश्रीसमावृतोरस्कम् ॥ ३९ ॥

श्यामलविषधररूपं विष्टपसंदोहवर्धनव्यग्रम् ।
करिवरदानविदग्धं कुमारजनकं वृषाकपिं वन्दे ॥ ४० ॥

शंकर हर मे दुरितं शशाङ्कसच्छात्रगात्र हर मेदुरितम् ।
मम करुणाम्बुनिधे हि स्वान्ते तव पादपद्ममाशु निधेहि ॥ ४१ ॥

पातु महादेवो मां प्रार्थितमर्थं प्रदाय स सदेवोमाम् (?) ।
यस्य चरित्रं वेदप्रकरो दिव्यात् ळतं(?)पवित्रं वेद ॥ ४२ ॥

वसनविभिन्नगजेश व्याधप्रवरापवर्गकृन्नगजेश ।
मामवपारावारं प्रपन्नसंत्राणदृष्टपारावारम्(?) ॥ ४३ ॥

सीमापरिमितधामा काचित् कलधौतशिखरिनिर्जितधामा ।
अवनतवसुधाभरदा निवसतु [हृदि] देवता नवसुधाभरदा ॥ ४४ ॥

शंकरशर्वसदाशिवगिरिशमहादेववामदेवादिः ।
नामालिरेव शिव मे कालत्रयक्षपणकरणतामयताम् ॥ ४५ ॥

नटतु त्वन्नामसुधातुरङ्गवलयो ममेश जिह्वाग्रे ।
निखिलतपोधनरसनानटीकुलाविरतनाटनाचार्यः ॥ ४६ ॥

अहमलसः सेवायां शिव तव मन्दस्त्वदर्चनासु परम् ।
अप्यसकृद् ध्यानविधौ विस्मृतिभागस्मि तदपि मां पाहि ॥ ४७ ॥

सत्कर्मभृशविरक्तो भगवन् दुष्कर्मकर्मठः सोऽहम् ।
मम गुणवैषम्यमिदं विनिवर्तयितुं त्वमेव चतुरोऽसि ॥ ४८ ॥

षडरिषु कारुणिकोऽहं सुचापलस्त्वत्पदाब्जविस्मरणे ।
ईदृशविषममनीषां कुरु मे गिरिश प्रतिक्रियाविषयाम् ॥ ४९ ॥

कर्षन्ति षडरयोऽमी पातयितुं पापकूपकुहरे माम् ।
आबध्येन्द्रियपाशैः पालय हर दासदासोऽस्मि ॥ ५० ॥

प्रणतप्राणिगणानां प्रमोहसर्वस्वमोषकं भीमम् ।
श्रुतिशिखरगहनलीनं तस्करपतिमीश वक्ति वेदस्त्वाम् ॥ ५१ ॥

निजशिवतामक्षोभ्यामप्यखिलापूतवस्तुसंसर्गात् ।
अटसि द्विपदपशूनां पितृवनभूमिं परीक्ष्य दर्शयितुम् ॥ ५२ ॥

आबध्य मोहपाशैः कुमतिपशून् हृदि तिरोहितं यमिनाम् ।
त्वामखिला दर्शयति श्रुतिरीश्वर ते तथापि न विदन्ति ॥ ५३ ॥

शिव तव परमैश्वर्यं पदे पदेऽपि प्रकाशितं श्रुतिभिः ।
पिदधत् कपटतमोभिः कुमतीन् वञ्चयसि भिक्षुवेषेण ॥ ५४ ॥

शिव भवदाज्ञामयमप्यक्षयवात्सल्यभाजनं तेऽहम् ।
इति सत्कृत्यमशेषं त्यजामि मां पाहि पाहि पाहि पुनः ॥ ५५ ॥

सत्यपि परमैश्वर्ये श्रुतिविदिते गिरिश ते मुमुक्षुभ्यः ।
वदति दिगम्बरता ते वैराग्यमनन्यदेवसामान्यम् ॥ ५६ ॥

पिञ्जरमरीचिकूटः प्रसाधनेन्दूदयाद्रिवरकूटः ।
तावकमौलिकिरीटस्तनोतु शुभमीश तव जटाजूटः ॥ ५७ ॥

शिव तव निटालफलकं शिवांशभूतस्ववामलसदलकम् ।
निजदृक्कुङ्कुमतिलकं नितरां न तनोति विस्मितं किल कम् ॥ ५८ ॥

शेखरशशिकरपातश्रितप्रमीलं शुचेर्विहारगृहम् ।
निटिलतटान्तर्निलयं नमामि तव देव नयननीररुहम् ॥ ५९ ॥

निजरथपदपरिणामं निखिलरथाङ्गीचकोरपुण्यफलम् ।
निरुपधिकृपारसार्द्रं नौमि तवेशान नयनयोर्युगलम् ॥ ६० ॥

भाति श्रितरुचिबृन्दं ब्रह्मोपेन्द्रप्रतीक्षितस्पन्दम् ।
भ्रूयुगमसितं तव शिव मुखराकेन्दोः कलङ्करङ्कुरिव ॥ ६१ ॥

श्वसितश्रुतिततिकान्तां शिवामुखाम्भोजसौरभक्रान्ताम् ।
शिव तव योगश्रान्तां श्रयामि नासां त्वदक्षिभृत्स्वान्ताम् ॥ ६२ ॥

तव परशिव वचनामृततटाकतटपद्मरागसोपानम् ।
शुभतरमधरोष्ठं ते श्रयामि भवदास्यजलजकिञ्जल्कः ॥ ६३ ॥

पाटलभवदधरोष्ठप्रवालहिन्दोळगर्भकृतखेलम् ।
संभृतसकलाह्लादं स्मरामि रम्यं स्मितार्भकं हर ते ॥ ६४ ॥

शिव तव दशनश्रेणिर्वागमृतव्रातबुद्बुदप्रतिभः ।
स्फुरति तवान्तच्छन्नस्वभावसंसिद्धसत्त्वराशिरिव ॥ ६५ ॥

हर तव हसितच्छलतो हरति मनः कोऽपि कोकवैरिशिशुः ।
आरुह्य चारु खेलन्नरुणाधरपद्मरागपीठं ते ॥ ६६ ॥

हसितहिमांशुशिशुस्ते हर वागमृताब्धिसंभवः कोऽपि ।
तव [मुखप]रिणतिभाजो लुठति शशाङ्कस्य पूर्वजस्याङ्के ॥ ६७ ॥

सरसहिमाचलतनयासंगीतसुधानि[पानभूमि]निभम् ।
दिव्यं श्रुतियुगमीडे दृगब्जविश्रान्तिमण्डपं मृड ते ॥ ६८ ॥

मञ्जुलमण्डनकुण्डलकुण्डलिपतिविदितमार्दवातिशयम् ।
स्फाटिकमणिमुकुराभं कपोलफलकं करोतु कुशलं ते ॥ ६९ ॥

अतुलापदविनिवेश्यं त्वनुनयसमये शिवापरामृश्यम् ।
ध्यातृहृदैकस्पृश्यं तव चुबुकं भाति दिव्यदृग्दृश्यम् ॥ ७० ॥

स्मितशिशुहंसोत्तंसं लोचनलोलम्बसंभृतोल्लासम् ।
श्यामलकलगलनालं वन्दे तव देव वदनकोकनदम् ॥ ७१ ॥[1]

हर हसिताङ्कुरहीरैरवतादधरोष्ठपद्मरागाभ्याम् ।
खचितं शक्रमणिभ्यां कनीनिकाभ्यां च तव मुखं मुकुरौ ॥

मम तु हृदलिरनपेतस्पृहः स्वपीडामपीश मोचयितुम् ।
तव मुखसरसिजसुषमामरन्दलहरीं पुनः पुनर्लिहति ॥ ७३ ॥

तं मतिरनुगच्छति मे वागपि शंभो सतीव भर्तारम्
तेषां प्रेषकभूतः फलदाता च त्वमेव भवसि विभो ॥ ७४ ॥

सरसिजसमविषमदृशं शेखरशिशुजातिजातयुवसदृशम् ।
अमलं तव भव तादृशमाननमीडे मृडेतरासदृशम् ॥ ७५ ॥

हर दरहसितज्योत्स्नासुहितशिवादृक्चकोरवरमिथुनम् ।
मुखविधुमकलङ्कं ते मानसहरिणोऽयमारुरुक्षति मे ॥ ७६ ॥

अमृतकरोऽप्यकलङ्कं सरसिजमपि चन्द्रसंनिधेर्विकचम् ।
आननमप्रतिबिम्बं दर्पणमपि देव दीप्यते हर ते ॥ ७७ ॥

[1] Repeated; see verse 27 above.

अत्रिदृगुद्भूतिरुचं सत्रिदृगुद्भूतिरुचमपीश तव ।
सुस्मयकरमपि मनसा विस्मयकरमास्यमुकुरमीक्षेऽहम् ॥ ७८ ॥

शशपशुमधुपालिभ्यां शिव संसर्गात् कलङ्किते अब्जे ।
स्वच्छद्विजततिसङ्गात् स्मितकीर्तिमतः कथं मुखस्य समे ॥ ७९ ॥

स्फुरदहिहाराविरलः समस्तभुवनाभयाय भृतगरलः ।
सुखयतु तव शर्व गलः स्वकालिमाक्रान्तभुजशिरोयुगलः ॥ ८० ॥

अजगवपरशुधरौ नमदभीतिवरदानपारदृश्वानौ ।
कृतभुवनावनहननौ करौ वरौ ते शुभंकरौ भवताम् ॥ ८१ ॥

गलरुचिकृततततमालं गीरपदं ते स्वकान्तितुलिततमालम् ।
कर्कशकुचपरमालंकृतसव्यमुरः पुनातु शिव परमालम् ॥ ८२ ॥

घनतरकालिमझर्या राजति धारेव रोमराजिस्ते ।
गलकम्बूदरपूर्तेर्गलिता हरनाभिगह्वरे पतिता ॥ ८३ ॥

पृथुतरवरकृत्तिवृतं प्रचुरमणीखचितसर्पसूत्रधृतम् ।
कलये रुचिरत्वभृतं कटितटमीशान मनसि ते निभृतम् ॥ ८४ ॥

हर तव गिरिवरकन्याकरसरसिजसौकुमार्यसारविदौ ।
ऊरू करिकरचारू हरतामचिरेण दुरितभारं मे ॥ ८५ ॥

चरणसरोरुहनाले चिन्तकचित्ताध्वधावने जवने ।
अनघे हर तव जङ्घे अघसंघातं ममाशु घातयताम् ॥ ८६ ॥

प्रणतामरवरमौलिप्रसूनमकरन्दसंभृतं शिव ते ।
चरणसरोरुहयुगलं चुम्बति मम चित्तचञ्चरीकोऽयम् ॥ ८७ ॥

भव तव पदयोर्युगलं भवतः कैवल्यकल्पभूमिरुहः ।
किसलययुगमिव मृदुलं मूलतलाङ्कुरितमुल्लसत्यरुणम् ॥ ८८ ॥

प्रणतमनोरथदोहं प्रसृमरशोणतरकिरणसंदोहम् ।
प्रणमामि शमितमोहं पदमीश तव प्रसादकामोऽहम् ॥ ८९ ॥

धर्मवपुः शतकोटिर्धरमर्दितपङ्क्तिकण्ठभुजनिजकोटि ।
पातु पदं सुरमकुटीपाकारिशिलालिवासराजीवकुटी ॥ ९० ॥

पाति न परशिवकमलं परमापहृतस्मरन्मनस्कमलम् ।
प्रासभवापदकमलं प्रपन्नमाशु त्वदीयपदकमलम् ॥ ९१ ॥

तव कृतमङ्घ्रिपरागैर्भजतां भवसिन्धुशोषणाध्ययनम् ।
उत्कटनटनस्रस्तादुमापते ते कपर्दबन्धात् किम् ॥ ९२ ॥

मार्दवमुख्यागारं मखभुङ्मकुटसुमसौरभोद्गारम् ।
पदमुरु नटनोदारं पातु तवान्विष्यदादिभूदारम् ॥ ९३ ॥

पल्लवदत्तनिकारं प्रचण्डनटनास्तकाल्यहंकारम् ।
हृतनतहृदयविकारं हरचरणं नौमि नीरजाकारम् ॥ ९४ ॥

अहिततिविहितकलापं महितं वपुरीश सहितशैलसुतम् ।
निजहितनिहितकटाक्षं सुहितयमि स्तौमि हितदोषभरम् ॥ ९५

त्रिदशदयारसभरितं त्रिणतसुमेरुत्वचित्रनिजचरितम् ।
त्रिपुरहरं मेदुरितं त्रिलोचनं धाम हरतु मे दुरितम् ॥ ९६ ॥

गिरिवरवसति सदारं गलबिलनिगृहीतक्ष्वेड(न)भयदारम् ।
प्रबलजलंधरदारं पातु महः किमपि पार्वतीदारम् ॥ ९७ ॥

अपि चिरमभिलषितं ते सेवनमविदन्तमर्थनारीतिम् ।
कुत्सितविषयविधेयं स्वीकुरु मामीश किंकरत्वेन ॥ ९८ ॥

अनलशिखातीतेन स्यूततरं शिशिरयाघजातेन ।
अमृतसरिच्छीतेन स्मरहर तव मामपाङ्गपातेन ॥ ९९ ॥

चिरकर्मपाशबद्धं चलकमलोल्लासकल्पितश्रद्धम् ।
मामीश षडरिविद्धं मोचय मोहेन भृशतराशुद्धम् ॥ १०० ॥

तव शिव दृगन्तपातस्तारयतान्मां भवाम्बुनिधिपोतः ।
निजहृदयाधारेणानीतः कारुण्यकर्णधारेण ॥ १०१ ॥

नियमकृत्यैकरतं पालय निरयेऽथवेश पातय माम् ।
मदवनभरविन्यसनं त्वयि विदधे त्वामहं तु विश्वास्य ॥ १०२ ॥

आर्येशस्तुतिरेषा त्वार्याभिवृत्तविरचितग्रथिता ।
स्यादेव मोददा मे विदुषां शब्दार्थगूढसारविदाम् ॥ १०३ ॥

इत्यार्येशस्तवः समाप्तः

---

## २७. कालहस्तीश्वरस्तुतिः[1]

गण्डूषस्य समं न्यधायि भवता मन्दाकिनी मस्तके
क्रव्यस्य प्रतिपादनेऽस्य सदृशो हस्ते मृगः स्थापितः ।

[1] Based on the two copies which give an identical text, found in one MS. No. 73245 (D. C. Nos. 766-7).

नेत्रस्यापि सदृक्षमक्षिदशकं प्रादायि पश्चोत्तरं
किं वर्ण्येत कृतज्ञता तव विभो श्रीकालहस्तीश्वर ॥ १ ॥

विन्यस्ते शबरेण मूर्ध्नि चरणे देहः कुतोऽप्यष्टधा
गण्डूषैरभिषेचने विरचिते वक्त्रं कृतं पञ्चधा ।
उच्छिष्टे विनिवेदिते पुनरसौ रूक्षं विषं भोजितः
शिक्षामस्य करोषि कर्मसदृशं श्रीकालहस्तीश्वर ॥ २ ॥

पाणौ तीक्ष्णपरश्वथः सहरिणः फालान्तराले शिखी
पाथो मूर्ध्नि च विद्यते तव करे पात्रं विधातुः शिरः ।
पक्तुं वामतनौ नगेन्द्रतनया किं वा किराताननप्रभ्रष्टामिषवाञ्छितं कलयसि श्रीकालहस्तीश्वर ॥ ३ ॥

पादपाषाणगण्डूषपादुकाचापताडनैः ।
ज्ञातेयं तव गौरीश पितृमातृविहीनता ॥ ४ ॥

सर्वात्मता ते श्रुतिषु प्रसिद्धा सत्यैव सा कालकरीश नूनम् ।
अपश्यतस्त्वामधुना समस्तं यतो न मे दृष्टिपथं प्रयाति ॥ ५ ॥

नाहं विभूतिपरिकल्पितफालदेशो
रुद्राक्षदामपरिवेष्टितकंधरो वा ।
श्रीकालहस्तिनगरीश्वरदासदास-
दासानुदासजनकिंकरकिंकरोऽस्मि ॥ ६ ॥

[इति श्रीकालहस्तीश्वरस्तुतिः संपूर्णा]

# २८. क्षमास्तोत्रम्[1]

### परमेश्वरयोगिकृतम्

शुभानामेकान्तं परमशिवपादाब्जयुगलं
गुरूणामाचार्यं शिरसि परिभाव्य स्मृतिशतैः ।
क्षमास्तोत्रं कर्तुं व्यवसितमतेः साहसमिदं
सहन्तां सन्तोऽमी भुवि सनकयोगीन्द्रसदृशाः ॥ १ ॥

शिव त्वं न प्रीतो यदि मदपराधैककुपित-
स्ततः किं वा स्वामिन् पशुरयमनाथः कलयति ।
अहो ज्ञातं दैवान्मम तु शरणं ते सहचरी
क्षमास्तीत्येतस्याश्चरणकमलं यामि शरणम् ॥ २ ॥

अहं जाने सत्यं सततमपराधैकनिलयं
मदात्मानं साक्षादपि परशिवोऽपि स्फुटतरम् ।
तथापि क्षान्ते त्वं कलयसि शिवप्रेमविषयं
मुहुर्मां तस्यास्ते किमहमधुना हन्त करवै ॥ ३ ॥

क्षमे त्वं माता त्वं शिवविभवसंपत्तिलहरी
त्वमानन्दोन्मेषस्फुरणलहरी त्वं परंगतिः ।
त्वमात्मा त्वं विद्या मम तु सकलक्षेमपटली-
त्यहं मत्या धृत्या श्वसिमि कलुषी निर्भयमपि ॥ ४ ॥

सदाप्याज्ञोलङ्घीत्यहह मयि कोपेन भगवान्
न कर्तुं किं किं वा स्मरति तदयुक्तं न च मम ।

[1] Edited from the MS. No. 67731 (D. C. No. 780). For other works of the author see D. C. vol. IV, Introd. p. xxxv.

त्रायुक्तं मातः स्फुरति मयि वात्सल्यवशतः
क्षमे तादृश्यास्ते प्रकृतिरियमेवं विजयते ॥ ५ ॥

क्षमे दुष्टात्माहं शिव शिव शिवेन श्रुतिमुखा-
न्निषिद्धं यद्यद्वा विहितमुभयोरप्यमुकयोः ।
विपर्यासं कुर्वे सततमधुना मां स्वजनतो
निराकुर्याच्छंभुर्घटय घटयाम्ब त्वमनिशम् ॥ ६ ॥

शिवक्षान्ते मां ते पदयुगलदासं पशुपते-
रयोग्यं योग्यं त्वं कलय दयया क्षेमकलया ।
इदानीं याहीति क्षणमितरचिन्तामुपगता
यदि स्याः कस्या वा जननि पुरतो रोदिमि वद ॥ ७ ॥

पुरारातिक्रोधप्रशमनविधे देवि पुरतो
विषीदन्तं भीत्या चरणपतितं पश्यसि न किम् ।
धिगेतज्जन्मेदं भवति दुरदृष्टं मयि यतः
स्वभावो मातस्ते प्रकृतिसुलभाया अपि मृषा ॥ ८ ॥

हरक्षान्ते किं ते मयि परमसूयास्ति महती
क गच्छेयं केयं नियतिरहहाम्भोधिपतितम् ।
मनो ज्वालामालाकुलमनलमद्यैव विशती-
त्यहं मन्ये मातर्जहिहि जहिहीमां करुणया ॥ ९ ॥

स्मरारिक्रोधाग्निप्रसरभरशान्ते करुणया
स्वतो मायावत्त्वात् क्रुधमसकृद्दादाय झटिति ।
ममाजस्रं त्रासीकरणचणदौर्भाग्यपटली-
जरत्तृण्याकक्षे क्षिपतु भवतीत्येव वृणवै ॥ १० ॥

## क्षमास्तोत्रम्

क्षमे घोरा मूर्तिर्ज्वलति बहुलज्वालजटिली-
कृतक्रोधाटोपस्फुरितनयनालोकविषमा ।
अहं कम्पे कम्पे भृशमसकृदागस्करतया
त्वमेवाद्य प्राणान् विभवमपि पातुं प्रभवसि ॥ ११ ॥

परं निर्विण्णोऽस्मि त्रिपुरहरकोपप्रशमन-
प्रवृत्त्यामत्यन्तं चपलमतिरालोलनयनः ।
भवत्याः पादाब्जाकलितमणिमञ्जीरकुहरे
निलीयैव क्षान्ते श्वसितुमहमिच्छामि सपदि ॥ १२ ॥

कथंकारं लोकाः सुरदनुजदैतेयमनुज-
प्रधाना वर्तन्ते कुशलमुदिताः संप्रति किल ।
इमे सर्वेऽप्यागांस्यपरिमितसंख्यानि दधते
स्मृतं क्षान्ते त्वत्तो ननु भवति सौख्यं त्रिजगताम् ॥ १३ ॥

क्षमे साधारण्यादिममपि समुद्धर्तुमलमि-
त्यवैषि प्रायोऽहं शिव शिव महापापनिकरैः ।
समुद्भूतस्वात्मा ह्यधिकतरयत्नेन जननि
द्रुतं मध्यं बद्ध्वाप्यनिमिषतया तिष्ठतु पुरः ॥ १४ ॥

यथा मामानन्दस्फुरदमलनेत्राब्जयुगली-
कटाक्षैराप्लाव्य स्मितमधुरवाचा स्मरहरः ।
अये वत्साजस्रं जगति न बिभीहीति निगदेत्
तथा कर्तुं क्षान्ते प्रभवसि दया चेत् तव मयि ॥ १५ ॥

निषिद्धानुष्ठानैर्जनितमपराधं शमयितुं
वृथा प्रायश्चित्ताद्यकरवमनेकैर्जनिशतैः ।

कियन्तो जायन्ते निमिषसमयेऽप्येतदधिका-
स्ततः शान्ति क्षान्ते कलय सकलानां त्वमधुना ॥ १६ ॥

यथैव क्षान्ते मे सततमपराधप्रणयिता
स्वभावस्तद्वत् ते परमशिवकोपप्रशमनम् ।
ततः का वा ग्लानिस्तव मम समुद्धारणविधौ
किमालोच्यं मातः सुलभहृदयेत्येव वृणवै ॥ १७ ॥

अये क्षान्ते मातः शिवमनसि कोपेन कलुषे
प्रविश्यैनं शीघ्रं स्वगुणनिकरैर्बन्धय दृढम् ।
प्रसीदेद् देवोऽयं सुलभकरुणत्वादिह पुन-
र्न संदेहो लेशोऽप्यहमपि सुतीर्णार्तिजलधिः ॥ १८ ॥

कियन्मे प्रारब्धं प्रभवति कियत् संचितमिदं
तृणायैतन्मन्ये स्मरणमपि नागामिनि मम ।
परं शंभोरेतज्जनिरसकृदागस्करमभू-
दिति क्षान्ते तप्तं हृदयमिदमेकं तु शमय ॥ १९ ॥

त्वया स्वाधीनश्चेदखिलभुवनानामधिपतिः
क्व संसारो मातर्जननमरणाख्यः प्रभवति ।
न शङ्केऽतश्चेतस्तव तु नवनीताच्च सुलभं
द्रवीभूयात् क्षान्ते मम हृदयसंतापविसरैः ॥ २० ॥

अहं याचे मातस्तव पदसरोजातयुगली-
पुरःपातंपातं पशुपतिरयं मामपि पशुम् ।
स्वकीयं मत्वैव व्यपनयतु पाशं करुणया
यथा वा क्षान्ते त्वं विरचय तथेत्येव वृणवै ॥ २१ ॥

कुतश्चिन्तामन्तः कलयसि हरक्रोधशमन-
क्षमे नाहं शक्तः क्षणमपि च सोढुं विमुखताम् ।
मदीयं संतापं न गणयसि किं वा बहुतरं
बतात्यन्तं बालः शिरसि हिमवन्तं वहति किम् ॥ २२ ॥

कदा वा क्षान्ते त्वं गिरिशहृदयारामपदवी-
मुपस्थातुं सख्या सह करुणया संज्ञपयसि ।
इति प्रेम्णा मातर्बत सपदि पश्याम्यनिमिषं
यथा कादम्बिन्याः स्फुरणमभितश्चातकशिशुः ॥ २३ ॥

कदा शंभुक्षान्ते कुवलयदलश्यामलदया-
कटाक्षैः पश्येस्त्वं पुरभिदपि संतुष्टमनसा ।
स्वकीयं जानीयादिति बहुलचिन्तापरवशं
स्वसंध्याकर्मादीन्यपि बत विसस्मार हृदयम् ॥ २४ ॥

कुतो वा माहात्म्यं परशिवगुणानां प्रभवति
त्वया सर्वेऽप्येते परमियदुदात्तत्वमहिताः ।
अहं जाने क्षान्ते विशदमनुकम्पामपि सखीं
तथाप्येषा मातस्त्वयि निहितभारा विरमति ॥ २५ ॥

सखीमाहूय त्वं सपदि परिपृच्छाम्ब करुणां
तदा जानास्येतद् वितथमथवा स्यादवितथम् ।
ततः पश्चाद्वा मां पशुपतिपदाम्भोजशरणं
स्वयं कुर्याः क्षान्ते मयि कलितविश्वासलहरी ॥ २६ ॥

पुरा भर्गक्षान्ते श्रमशतपरीपाकवशतः
पुराणैराम्नायैः शमदमपुरोगैर्बहुविधैः ।

मदागोऽब्धिं तर्तुं विहितबहुयत्नो बत जडः
परिश्रान्तो दैवात् तरणिमवलम्बेऽद्य भवतीम् ॥ २७ ॥

प्रसन्नत्वं शंभोर्विलसति कया वेति भुवने
विचार्याहं क्षान्ते त्वयि निहितभारोऽस्मि सपदि ।
कुतो मातः कालं चकितमनसो यापयसि मे
मुहूर्तं किं सह्या मम हृदयसंतापलहरी ॥ २८ ॥

क्षमे त्वं वैमुख्यं यदि मयि दधास्यम्ब निमिषं
पतेयं पातालेऽकटकट निमज्जेयमुदधौ ।
ततः का वा क्षान्ते मम गतिरिदं चिन्तय मना-
गलं पश्चाद्यन्मां नयसि तदिदं मेऽस्तु कुशलम् ॥ २९ ॥

यतो घोरां मूर्तिं शमयसि समाश्लिष्य मधुर-
स्मितज्योत्स्नाहृद्यं कलयसि मुखं शांकरमतः ।
शिवा मूर्तिः शंभोर्भवसि जननीत्येव मनवै
ततस्त्वत्तो भिन्नो न भवति शिवः क्वापि विषये ॥ ३० ॥

यदा कोपाभर्व्याः प्रभवसमयः स्यात् तव तदा
प्रभावोन्मेषस्य प्रकटनमहोत्साहसमयः ।
तदन्यस्मिन् काले किमु महिमलेशोऽपि विदितो
भवेद् देवि क्षान्ते विलसति मया सोऽप्यवसरः ॥ ३१ ॥

क्षमाया वश्योऽयं निखिलजगतामीश्वर इति
प्रणम्रा देवाद्याः खलु शिवपदाम्भोजयुगले ।
अये मातः सेयं प्रणतिरभवत् ते ननु ततः
प्रपद्ये त्वामेव प्रकृतहरकोपाच्चपलधीः ॥ ३२ ॥

प्रपद्येऽहं शंभोः प्रकृतिसुगुणायुष्करकला-
क्षमामास्माकीनान् प्रसभमपराधान् शमयितुम् ।
क्षणं जाग्रत्वात्मन्यधिकभयभक्त्येन्द्रियगणा
भवन्तः पश्चाद्वो भवति सफलं वाञ्छितमपि ॥ ३३ ॥

इयानात्मन्यासः प्रभवतु शिवायैव सकल-
प्रपञ्चव्यापारे विषयविषयीभाववशतः ।
यदानन्दप्रायं यदपि परमानन्दमयमि-
त्युपात्तं क्षान्ते तज्जननि घटय त्वं पतिपशू ॥ ३४ ॥

इयान् वाञ्छापूरः शृणु जननि सर्वंसहपदे
स्थितः शंभुर्देव्या सह वृषभमारुह्य पुरतः ।
प्रसन्नोऽहं वत्स त्वमपि वरयाभीष्टमिति मां
कदा क्षान्ते ब्रूयादिति तदितरं नास्ति मनसि ॥ ३५ ॥

यजेऽहं बुध्येऽहं बहुतपसि तिष्ठाम्यहमिति
भ्रमादात्मप्राप्तिं ह्यभिदधति निश्रेयसममी ।
कथा का वा तस्य त्वमिह विमुखा चेदलमलं
महादेवक्षान्ते स्मरतु भवती तानिव न माम् ॥ ३६ ॥

तपस्यात्मद्रोहः सवनविषये जीवहननं
वृथा तिष्ठेयं चेदहह सुतरां कर्मविरहः ।
ततः सर्वत्रापि स्फुरितमपराधं गमयितुं
विना त्वां हे क्षान्ते कुशलमवलम्बं न मनवै ॥ ३७ ॥

विना चेत् त्वामेकां सकलमपि लोकप्रयतनं
भवेन्मातः सत्यं करकृतमकूपारतरणम् ।

अहं दैवात् त्वय्याकलितनिजभारोऽस्मि परतो
भवक्षान्ते चित्तं तव मम तु भाग्यं कथमिव ॥ ३८ ॥

प्रसादं वाञ्छन्ति प्रबलमपराधं तिरयितुं
न मन्यन्ते किं ते निपुणमतयः शास्त्रकुशलाः ।
इमं तं धीमन्तं जननि मनवै यस्तव पदे
प्रपन्नः श्रीक्षान्ते सकृदपि भयाविष्टमनसा ॥ ३९ ॥

महादेवस्यैव श्रुतिमतमनुग्राहनिपुणं
शिवां मूर्तिं प्राहुः कतिचिदपरे हन्त करुणाम् ।
अहं मन्ये क्षान्ते त्वमिति सकलानामुपरि ते
प्रकाशो मन्तूनां सहनसमये जाग्रति मुहुः ॥ ४० ॥

दयानाम्नी क्षान्ते तव निजसखी काप्यणुतरं
न वैमुख्यं कर्त्री स्मरति हृदि पत्युर्विमुखताम् ।
न वैयात्यं तस्या ननु सकलकालेऽपि भवती-
मनुज्ञाप्यैवेयं रमयति शिवं वल्लभमपि ॥ ४१ ॥

तव स्वाधीनाया जननि करुणाया अपि भृशं
मदर्थं वक्तव्यं स्मरसि किमु सापत्न्यमसहम् ।
स्वभावो भज्येत त्रिणयनवशीकारकुहना-
महाविद्ये क्षान्ते तदलमनयेर्ष्याकुलतया ॥ ४२ ॥

मदीयानन्दश्रीमुखकमलसूर्योदयकला
हरक्रोधाभिख्या शिव शिव घृणा मूर्च्छितवती ।
त्वया संजीविन्या सपदि सुखमुज्जीवतुतरा-
मिति क्षान्ते याचे व्यसनमयपाशेन चपलः ॥ ४३ ॥

मनःशल्यं क्षान्ते शृणु [1]दिविषदाराध्यचरणो
मदर्थं संप्राप्तां दयितदयितां तामपि दयाम् ।
निराकृत्याप्यागःशतनियुतकोट्यादिगणने
प्रवृत्तो हा किं स्यात् त्वमसि परमम्बाम्ब शरणम् ॥ ४४ ॥

न मां त्वं जानासि स्मरहरदयामन्दिरशिला-
बहिर्द्वारप्रान्तस्थितशुनकदासोऽस्मि जननि ।
किमाब्रह्मस्तम्बान्तमपि समदृष्ट्या निजजनं
न पश्येर्हे क्षान्ते मयि विमुखतायां किमु फलम् ॥ ४५ ॥

सदा मातर्ब्रह्मादिभिरपि बहु स्तूयस इति
प्रसिद्धिर्व्याप्नोति त्रिजगदपि मन्तुं मम पुनः ।
स्वभावारिर्देव्या भुवनमपि जित्वा विजयते
क्षमे विज्ञाप्यत्वादिदमवदमालोच्यमपरम् ॥ ४६ ॥

कदाचिद् यो मन्तुं विरचयति तस्मै पशुपतिः
प्रसीदेत् कारुण्यादिति भवतु नाहं तदुपमः ।
यतोऽसंख्यान्यागांस्ययि शिवमनस्तापशमन-
प्रभे नित्यं कुर्वे तदिदमवितुं त्वं प्रभवसि ॥ ४७ ॥

मृषा कोपत्रासाज्जननि तव पादाब्जपतितं
वितन्यत्वादेतद्व्यसनतरलामीक्षितुमपि ।
परीहासाद्यत्नो भवति न पुनः सत्यमिति मे
ततः क्षान्ते किंचिन्निगद सुमुखः स्यात् तव पतिः ॥ ४८ ॥

[1] निमिषद्—MS.

अहं क्व ब्रह्माण्डप्रलयभयदाटोपनिटिल-
ज्वलन्नेत्रालोकः क्व नु स भगवानम्ब तदलम् ।
मनःपूर्वं कोपं मयि पशुपतिर्नैव कुरुते
क्षमे मां सौलभ्यादपि सपदि पातुं प्रभवसि ॥ ४९ ॥

यदण्डे विष्ण्वाद्यैः पशुविजयमत्तैः प्रमुदितं
तदण्डं यस्यैकक्षणविकचफालाक्षिनिहतम् ।
तदीयक्षान्तिस्त्वं किमिति वचनीयाम्ब पशुभि-
र्यथाशक्ति स्तोत्रं कृतमिदमुपाश्रुत्य दयताम् ॥ ५० ॥

तनुर्घोरा कोपप्रकटनमयी सार्धमुदिता
शिवा मूर्तिः शान्तिप्रकटनमयी सार्धमुदिता ।
तदन्योन्यं साम्यादविरतसमाश्लेषसुभगः
शिवः साक्षादास्ते सपदि करुणे त्वं विजयतात् ॥ ५१ ॥

भवान्यापो ज्योतिः पशुपतिरियं शीतकिरणः
स सूर्यः सा शान्तिः क्रुदयमिति वेदान्तहृदयम् ।
तयोरैक्यं साक्षादुदयति सुषुम्नात्मकमह-
स्तदोमोमों क्षान्तिस्तुतिरिति मया पूर्णमुदितम् ॥ ५२ ॥

**स्तोत्रं क्षमाविषय**मात्मसुखैकहेतुं
साक्षाच्चकार **परमेश्वरराजयोगी** ।
क्षाम्यन्ति तस्य पठनादपराधकोट्यो
निःसंशयं भुवि भवन्ति च मङ्गलानि ॥ ५३ ॥

इति श्रीक्षमास्तोत्रं संपूर्णम्

---

## २९. गोकर्णेश्वरमानसिकाराधनम्[1]

(गोकर्णमानसिकपूजा)

श्रीबृहदम्बाधिपते ब्रह्मपुरोगाः सुराः स्तुवन्ति त्वाम् ।
व्युष्टा रजनी शयनादुत्थायैषामनुग्रहः क्रियताम् ॥ १ ॥

गोकर्णनाथ गौर्या सहसुतयारुह्य पादुके हैमे ।
मौक्तिकमण्टपमेहि स्नातुमवष्टभ्य मामकं हस्तम् ॥ २ ॥

तैलैः सप्तमहार्णवीपरिमितैस्तावद्भिरुष्णोदकै-
राज्यक्षीरदधीक्षुचूतरससत्क्षौद्रैस्तथान्यैरपि ।
स्नानार्हैरभिषेचयामि चतुरो वेदान् पठन् भक्तितः
स्वामिन् श्रीबृहदम्बिकेश कृपया तत् सर्वमङ्गीकुरु ॥ ३ ॥

अण्डभित्तिपरिवेष्टनयोग्यान् हंसचित्रितदशानुपवीतैः ।
अर्पयामि भवते बृहदम्बाधीश धत्स्व नवपीतपटांस्त्वम् ॥ ४ ॥

भस्मोद्धूलनपूर्वकं शिव भवद्देहं त्रिपुण्ड्रैरलं-
कृत्वादावनु चन्दनैर्मलयजैः कर्पूरसंवासितैः ।
सर्वाङ्गं [2]तव भूषयामि तिलकेनालीकमप्यादरात्
पश्यात्मानमनेकमन्मथसमच्छायं स्वमादर्शगम् ॥ ५ ॥

यावन्तस्त्रिजगत्सु रत्ननिकरा यावद्धिरण्यं च तै-
स्तेनापीश तवाङ्गकेषु रचयाम्यापादकेशं हृदा ।

[1] Based on the MS. No. 73243 (D. C. No. 788). It is on the god at Tirugokarnam near Pudukkottai. See also *Bṛhadambāryā-ṣṭaka* above (p. 74) which is on the consort of Gokarṇeśvara.
[2] MS.—सम.

योग्यं भूषणजातमद्य बृहदम्बेश त्वयाथाम्बिका-
पुत्रेण प्रतिगृह्यतां मयि कृपादृष्टिश्च विस्तार्यताम् ॥ ६ ॥

नन्दनचैत्ररथादिषु देवोद्यानेषु यानि पुष्पाणि ।
तैर्भूषयामि नागाभरण बृहन्नायिकेश ते गात्रम् ॥ ७ ॥

कोटिकोटिगुणितैः शिव बिल्वैः कोमलैर्वकुलवृक्षवनेश ।
स्वर्णपुष्पसहितैः श्रुतिभिस्त्वां पूजयामि पदयोः प्रतिमन्त्रम् ॥ ८ ॥

गुग्गुलुभारसहस्रैर्बाडववह्नौ प्रधूपितो धूपः ।
वकुलवनेश स्वामिन्नगरुसमेतस्तवास्तु मोदाय ॥ ९ ॥

बिसतन्तुवर्तिविहिताः सगोघृताः शतकोटिकोटिगणनोपरि स्थिताः
प्रभयाधरीकृतरवीन्दुपावका वकुलाटवीश तव सन्तु दीपिकाः ॥ १० ॥

शाल्यन्नं कनकाभसूपसहितं सद्योघृतैरन्वितं
सोष्णं हाटकभाजनस्थमचलस्पर्धालु सव्यञ्जनम् ।
गोकर्णेश्वर गृह्यतां करुणया सच्छर्करान्नं तथा
मुद्गान्नं कृसरान्नमप्यतिसुधं पानीयमप्यन्तरा ॥ ११ ॥

कृसरमनोहरलड्डुकमोदकशष्कुल्यपूपवटकादीन् ।
सप्तसमुद्रमितान् श्रीवकुलवनाधीश भुङ्क्ष्व भक्ष्यांस्त्वम् ॥ १२ ॥

क्षोणीसंस्थैः समस्तैः पनसफलबृहन्नालिकेराम्ररम्भा-
द्राक्षाखर्जूरजम्बूबदरफललसन्मातुलङ्गैः कपित्थैः ।
नारङ्गैरिक्षुखण्डैरपि निजजठरं पूर्यतां मामकं चा-
भीष्टं गोकर्णसंज्ञस्थलनिलय महादेव सर्वज्ञ शंभो ॥ १३ ॥

क्षीराम्भोधिगतं पयस्तदुचिते पात्रे समर्प्योपरि
प्रक्षिप्यार्जुनशर्कराश्चणकगोधूमान् सहैलानपि ।
पक्कं पायससंज्ञमद्भुततमं मध्वाज्यसंमिश्रितं
भक्त्याहं वितरामि तेन बृहदम्बेशातिसंतुष्यताम् ॥ १४ ॥

मल्लीपुष्पसमानकान्तिमृदुलानन्नाचलानम्बुधौ
दध्नस्तद्वदमर्त्यधेनुदधिजान् हैयंगवीनाचलान् ।
क्षिप्त्वा श्रीबृहदम्बिकेश लवणैः किंचित् समेतं मया
दास्यामः(?) पिचुमन्दचूर्णसहितं दध्योदनं भुज्यताम् ॥ १५ ॥

अर्घ्यं चाचमनीयं पानीयं क्षालनीयमप्यम्बु ।
स्वामिन् वकुलवनेश स्वःसरिदद्भिः सुधाभिरपि दद्याम् ॥ १६ ॥

हर्म्ये रत्नपरिष्कृते मरतकस्तम्भायुतालंकृते
दीप्यद्धेमघटैरलंकृतशिरस्यालम्बिमुक्तासरे ।
दिव्यैरास्तरणैर्विभूषितमहामञ्चेऽभितो वासिते
साकं श्रीबृहदम्बया सकुतुकं संविश्य विश्रम्यताम् ॥ १७ ॥

पञ्चाक्षरेण मनुना पञ्चमहापापभञ्जनप्रभुणा ।
पञ्चपरार्ध्यैर्बिल्वैर्दक्षिणगोकर्णनायकार्चामि ॥ १८ ॥

एलाक्रमुककर्पूरजातिकाजातिपत्रिभिः ।
ताम्बूलं चूर्णसंयुक्तं गोकर्णेश्वर गृह्यताम् ॥ १९ ॥

बृहदम्बापते हेमपात्रयित्वा महीतलम् ।
कर्पूरयित्वा हेमाद्रिं तव नीराजयाम्यहम् ॥ २० ॥

छत्रं ते शशिमण्डलेन रचयाम्याकाशगङ्गाझरैः
श्वेतं चामरमष्टदिक्करिघटाकर्णानिलैर्वीजनम् ।

आदर्शं रविमण्डलेन जलदारावेण भेरीरवं
गन्धर्वाप्सरसां गणैर्वकुलभूवासेश तौर्यत्रिकम् ॥ २१ ॥

कल्याणाचलवर्चसो रथवरान् कार्तस्वरालंकृतान्
कैलासाद्रिनिभानिभानतिमरुद्वेगांस्तुरङ्गानपि ।
कामाभीप्सितरूपपौरुषजुषः संख्याविहीनान् भटा-
नालोक्याम्बिकयोररीकुरु बृहन्मातुः प्रियेशादरात् ॥ २२ ॥

काश्मीरचोलदेशानपि निजविभवैर्विनिन्दतः शश्वत् ।
संततफलदान् देशान् श्रीबृहदम्बेश चित्तजान् प्रददे ॥ २३ ॥

स्वर्गं भर्त्सयतो निमीलितदृशः सत्यं ह्रियालोकितुं
वैकुण्ठं हसतः कचाकचिजुषः कैलासधाम्ना तव ।
अत्याश्चर्ययुतान् गृहानभिमतानुत्पाद्य बुद्ध्या स्वया
भक्त्याहं वितरामि [देव] वकुलारण्याश्रयाङ्गीकुरु ॥ २४ ॥

विश्वस्यान्तर्बहिरपि विभो वर्तसे तेन ते स्तः
तत् त्वां नन्तुं क्रमितुमभितोऽसंभवान्नास्मि शक्तः ।
भक्ताधीनस्त्वमसि वकुलाटव्यधीशोपचारान्
सर्वान् कुर्वे प्रणमनमुखानाशयेनानिशं ते ॥ २५ ॥

श्रीमन्मङ्गलतीर्थपश्चिमतटप्रासादभद्रासना-
जस्रावासकृतान्तरङ्गमहनीयाङ्गेन्दुगङ्गाधर ।
स्तोत्रं ते कलयामि शश्वदखिलाम्नायैः सहाङ्गैः पुनः
सर्वैश्चोपनिषत्पुराणकवितागुम्भैर्भवच्छंसिभिः ॥ २६ ॥

सकलत्रपुत्रपौत्रं सहपरिवारं सहोपकरणं च ।
आत्मानमर्पयामि श्रीबृहदम्बेश पाहि मां कृपया ॥ २७ ॥

कायकृतं वचनकृतं हृदयकृतं चापि मामकं मन्तुम् ।
परिहृत्य मामजस्रं त्वयि कृतभारं महेश परिपाहि ॥ २८ ॥

नक्षत्रमालिकैषा[1] . . . .

---

## ३०. गोष्ठेश्वराष्टकम्[2]

सत्यज्ञानमनन्तमद्वयसुखाकारं गुहान्तःस्थित-
श्रीचिद्व्योम्नि चिदर्करूपममलं यद् ब्रह्म तत्त्वं परम् ।
निर्बीजस्थलमध्यभागविलसद्गोष्ठोत्थवल्मीकसं-
भूतं सत् पुरतो विभात्यहह तद्गोष्ठेशलिङ्गात्मना ॥ १ ॥

सर्वज्ञत्वनिदानभूतकरुणामूर्तिस्वरूपामला
चिच्छक्तिर्जडशक्तिकैतववशात् काञ्चीनदीत्वं गता ।
वल्मीकाश्रयगोष्ठनायकपरब्रह्मैक्यकर्त्री मुहु-
र्नृणां स्नानकृतां[3] विभाति सततं श्रीपिप्पिलारण्यगा ॥ २ ॥

श्रीमद्राजतशैलशृङ्गविलसच्छ्रीमद्गुहायां मही-
वार्वह्न्याशुगखात्मिकी विजयते या पञ्चलिङ्गाकृतिः ।
सैवाशक्तजनेषु भूरिकृपया श्रीपिप्पिलारण्यगे
वल्मीके किल गोष्ठनायकमहालिङ्गात्मना भासते ॥ ३ ॥

यत्राद्याप्यणिमादिसिद्धिनिपुणाः सिद्धेश्वराणां गणा-
स्तत्तद्दिव्यगुहासु सन्ति यमिदृग्दृश्या महावैभवाः ।

[1] The MS. abruptly ends here.
[2] Edited from the MS. 67160 (D. C. No. 3069).
[3] MS. adds महो.

यत्रैव ध्वनिरर्धरात्रसमये पुण्यात्मभिः श्रूयते
पूजावाद्यसमुत्थितः सुमनसां तं राजताद्रिं भजे ॥ ४ ॥

श्रीमद्राजतपर्वताकृतिधरस्यार्धेन्दुचूडामणे-
र्लोमैकं किल वामकर्णजनितं काञ्चीतरुत्वं गतम् ।
तस्मादुत्तरवाहिनी भुवि भवान्याख्या ततः पूर्वगा
काञ्चीनद्यभिधा च पश्चिमगता नीलानदी पावनी ॥ ५ ॥

श्रीमद्भार्गवहस्तलग्नपरशुव्याघट्टनाद् दारिते
क्षोणीध्रे सति वामदक्षिणगिरिद्वन्द्वात्मना भेदिते ।
तन्मध्यप्रथिते विदारधरणीभागेतिनद्याश्रये
सा नीलातटिनी पुनाति हि सदा कल्पादिगान् प्राणिनः ॥६॥

कल्पादिस्थलमध्यभागनिलये श्रीविश्वनाथाभिधे
लिङ्गे पिप्पिलकाननान्तरगतश्रीगोष्ठनाथाभिधः ।
श्रीशंभुः करुणानिधिः प्रकुरुते सांनिध्यमन्यादृशं
तत्पत्नी च विराजतेऽत्र तु विशालाक्षीति नामाङ्किता ॥ ७ ॥

श्रीकाञ्चीतरुमूलपावनतलं भ्राजत्त्रिवेण्युद्भवं
त्यक्त्वान्यत्र विधातुमिच्छति मुहुर्यस्तीर्थयात्रादिकम् ।
सोऽयं हस्तगतं[1] विहाय कुधिया शाखाग्रलीनं वृथा
यष्ट्या ताडितुमीहते जडमतिर्निःसारतुच्छं फलम् ॥ ८ ॥

श्रीमद्राजतशैलोत्थत्रिवेणीमहिमाङ्कितम् ।
गोष्ठेश्वराष्टकमिदं सारज्ञैरवलोक्यताम् ॥ ९ ॥

इति श्रीगोष्ठेश्वराष्टकं संपूर्णम्

---

[1] MS. adds फलं.

# ३१. जप्येशाष्टप्रासशतकम्[1]

## वेङ्कटसुब्बकविकृतम्

[2]श्रीकालीश लसत्कटाक्षगलदस्तोकानुकम्पाझरी-
[3]सेकाशेषविमृष्टसर्वविनमल्लोकाघ विश्वाधिप ।
राकाब्जानन योगिसत्कृतिपरीपाकायुतार्कोज्ज्वला-
लोकासद्धृदयाम्बुजे वस चिरं हे कामितार्थप्रद ॥ १ ॥

[4]एकाकी स्वयमीश्वरो जगति योऽनेकात्मना राजते
पाकारिप्रमुखैः सदैव निखिलैर्नाकालयैरर्चितः ।
लोकातङ्कहरः प्रभुर्भवनदीनौकायिताङ्घ्रिद्वयः[5]
[6]शोकापोहनमादरात् स तनुतां मे कामवैरी शिवः ॥ २ ॥

यं कालाभिधशैलखण्डनविधौ टङ्कायिताङ्घ्रिं हरं
कङ्कालाभरणं निषेव्य[7] गतहृत्पङ्का भृशं योगिनः ।
शं कामं प्रतिपेदिरे विनतहृत्पङ्कापनोदोद्यतं
तं कामद्विषमन्तरान्यमधुना कं कातरो नौम्यहम्[8] ॥ ३ ॥

[1] Based on two MSS.: (A) Adyar Library MS. No. PM2879 (D. C. No.1186: *Śivastotra*) and (M) MS. No. 2768 (Palm-leaf, 12 folios, 41 × 3.5 cm., Grantha script) of the Oriental Research Institute, University of Mysore; the latter is a revised copy of the text found in the former and contains many variants and a few different verses. The Stotra is on the God Pañcāpageśa (Praṇatārtihara) at Tiruvaiyaru (Pañcanadakṣetra) near Tanjavur.

[2] श्रीकार्युज्ज्वल°—M.  [3] °सेकामृष्टसमस्तखेदविनमल्लोकाघ—A.

[4] *Pāda-s* 2, 3, 1 are put as 1, 2, 3 in M.  [5] °र्महान्—M.

[6] मे कामस्मयभञ्जनः स तनुतां शोकापनोदं शिवः—A.  [7] भजन्ति—A.

[8] तं कामं सुरमौलिमाल्यमधुकृज्झंकारिपादं नम-
त्पङ्कापोहनतत्परं हृदि भजेऽहं कातरार्तिच्छिदम्—A.

किं कार्यं पतितौघपालनकलाशङ्काकुलैर्निर्जरै-
यं कारुण्यनिधिं समेति विगताहंकारमृष्यावलिः ।
अङ्कासीनगिरीन्द्रजास्तनतटालंकारकस्तूरिका-
पङ्कालंकृतवक्षसं पशुपतिं तं कालकण्ठं भजे ॥ ४ ॥

[1]संकेतं निखिला इवेत्य सुगुणा यं केलिभूमिं नता-
तङ्केलाधरवज्रमङ्घ्रिमगमन् पङ्केरुहश्रीमुषम् ।
कङ्केलिप्रसवप्रभं प्रणमतां तं केवलं पालने
शङ्के संधृतरागमीश्वर तवाहं केशवाद्यर्चित ॥ ५ ॥

[2]त्वां कैरीशमतर्पयं सुचरितैर्घूकैः समः सर्वतो[3]
भीकैः सार्धमटन् वृथानयमहो हा कैतवाढ्यैर्जनिम् ।
हे कैलासपते करोम्यपि तथा श्लोकैर्नुतिं केवलै-
रैकैश्वर्यनिधे भृशं मम[4] नमोवाकैश्च हृष्टो भव ॥ ६ ॥

एकोऽप्यद्य [5]कृतो मया नहि वृषो हा कोऽपि देवोऽर्चितः
काकोलं हरतस्तवाच्युतनुत श्लोकोत्तमप्रस्तुतौ ।
मूकोऽस्म्यज्ञतयाहमित्थमभवं काकोदरालंकृते
मा कोपं कुरु मद्धृदब्जमुकुलं व्यकोचयात्यादरात् ॥ ७ ॥

[1] लङ्केशोऽस्तुवदीश्वरं श्रुतिगणैर्यं केवलं सर्वदा-
नङ्केन्दूज्ज्वलमस्तकं वरगुणाः संकेतमेत्येव ते ।
स्वं केलीभवनं यमापुरखिलास्तं केशवाराधितं
पङ्केषु भ्रमतामवन्तमिह हृत्पङ्केरुहे भावये ॥ ५ ॥—M.

[2] लोकैकेड्यम्—M.

[3] °स्त्वां कैर्महेश प्रभो—M.

[4] °र्मे कैवल्यपदप्रदो भव—A.

[5] मया कृतो—M.

चक्रास्त्रादिदुरूहनैजमहिमन् चक्रायितेन्दीवरेट्
चक्राप्ताखिललोक नाथ विनमच्चक्रावनैकव्रत[1] ।
शक्राभीष्टद साम्ब मां भवमहाचक्राज्जवादुद्धर
प्रक्रामन्ति यतो विमोहनकृते वक्रा हि कामादयः ॥ ८ ॥

लेखाधीशमुखेष्टदाद्य हिमरुग्लेखात्तमौले नम-
द्रेखाक्ष्युत्पलचन्द्रिकायितलसन्मौखाभ शंभो विभो ।
रेखाब्जान्वितमुक्तिदाङ्घ्रियुगलीलेखार्थवाहद्युस-
च्छाखावद्गुण भूरि मे विरचयर्क्छाखादिगेय श्रियम् ॥ ९ ॥

शिख्याकाशरवीन्दुवायुजलभूमख्यात्मना यः प्रभु-
र्विख्यातो भगवान् विभाति सुमनोमुख्यादिभिः सेवितः ।
संख्यानन्दितभृत्यकिंनरपतेर्दुःख्यार्तिहं पङ्कज-
प्रख्याभं प्रतिपद्य तस्य चरणं[2] सुख्याश्वहं स्यां कदा ॥ १० ॥

रागाहंकृतिमुख्यशत्रुशमनो[3] योऽगाधिनाथात्मजा-
योगातिस्फुरदङ्कको मुनिवरैर्योगादिभिः सेव्यते ।
यागाद्यैश्च [4]सदा सभक्तिकमलं नागाजिनाच्छादनो
नागाधीशविभूषणो भवभयत्यागाय स स्यान्मम ॥ ११ ॥

[5]इङ्गालीकृतसर्वलोकमदकृच्छृङ्गारयोनिं बुधा
भङ्गायाघकुलस्य यन्ति मुनिहृद्रङ्गात्तनाट्यादरम् ।

1 °चक्रार्तिविध्वंसन—M.
2 °यक्षराजकमलाभिख्याङ्घ्रियुग्मं विभो दुःख्यार्तिघ्नमुपेत्य तस्य शिव ते—M.
3 रागाद्याकरचेतसामसुलभो—M.
4 सभक्तिकं प्रतिदिनं—M.
5 °विश्वमोहविमदयत्° for °सर्वलोकमदकृत्°—M.

पिङ्गाबद्धजटाभरं मम मनः संगाहते भूमिभृ-
च्छृङ्गागारमगात्मजाश्रितवरोत्सङ्गाभिरामं शिवम् ॥ १२ ॥

यं गायन्ति बुधा विमुक्तविषयासङ्गा [1]जटान्तोद्भव-
द्गङ्गानीरजराजिलोलविनदद्भृङ्गालिझङ्कारवम्[2] ।
तुङ्गालेपयुताद्रिजाकुचपरिष्वङ्गाभिरामोरसं
शृङ्गारैकनिकेतनं तमिह भाव्यङ्गापनुत्त्यै भजे ॥ १३ ॥

योगीशैः परतत्त्वमित्यविरतं यो गीयते प्राक्तना
वागीष्टेऽपि न वर्णितुं यमतुलं भोगीशभूषोज्ज्वलम् ।
भो गीर्वाणकुलैर्विभावितपदा[3] वागीशमुख्यैस्त्वया
द्रागीश स्मरणीय एष भवरुग्भागीदृशोऽहं विभो ॥ १४ ॥

प्राग्यामापरतिं मनस्तु विषये राग्याशु तन्मेऽधुना
योग्यामङ्घ्रिसुसंगतिं तव भजेद् भोग्या च मुक्तिर्यथा ।
योग्यावेद्यपदाद्रिजावरतपोभाग्याद्य कृत्वा तथा
द्राग् याच्ञां मम पूरयाखिलमहारोग्यार्तिविध्वंसन ॥ १५ ॥

[4]उग्रारित्रजहृत् सदाकृतकवागग्राधिगम्यं[5] हृदा-
प्यग्राह्यं[6] विबुधैर्हृतार्तजनतारुग् राजते यत् पदम्[7] ।
उग्रात्यद्भुतविश्वसर्जनगुणोदग्राशु मोहादयो
निग्राह्या मम चित्तमोहनकृतिव्यग्रा हि तेन त्वया ॥ १६ ॥

1 नितान्तं विभुं—M.
2 °राजजटम्—M.
3 गीर्वाणगणैरनूह्यमहिमन्—M.
4 उग्रारित्रजभञ्जनोऽकृतक°—M.
5 °गम्यः—M.
6 अग्राह्यो—M.
7 यः प्रभुः—M.

श्लाघा का कुरुषे दयां यदि [1]विभो वैघानसानां परा-
मोघायात्मवतां सतां भव शरन्मेघाभ विश्वेश्वर ।
[2]मेऽघानि त्वमपोह्य वामचरणव्याघातधूतान्तका-
मोघामीश नुतिं विधेहि कृपया मोघार्तिविध्वंसनाम् ॥ १७ ॥

आचारैर्विधिचोदितैरसुलभं प्राचामलक्ष्यं च यं[3]
[4]वाचामेति वटद्रुमूलनिलयं त्वाचार्यमृष्यावलिः ।
आचामत्यतुलं यदङ्घ्रिभजनं नीचारिवर्गं क्षणा-
द्धे[5] चामीकरशैलचाप [6]भवसंकोचाय मे[7] त्वं भव ॥ १८ ॥

इच्छाकार्यजगत्कृतिस्थितिलय स्वच्छाम्बुवाहच्छटा-[8]
सच्छायाङ्ग विभो कपर्दकुहरप्रच्छादिताभ्रापग ।
पृच्छामीश्वर मा कुरु त्वमिह भो यच्छाद्रिजाताप्रभो
यच्छान्तोऽनुभवत्यलं मुनिगणस्तच्छाश्वतं मे सुखम् ॥ १९ ॥

हृच्छाखामृग निष्फले भववने तुच्छाटसि त्वं वृथा
प्रच्छायं परिरब्धपीनकुचसद्गुच्छाढ्यगौरीलतम् ।
सच्छरीरकलभ्यमिष्टफलदं सच्छाखिनं सादरं
गच्छाद्यं गिरिशं शिवाख्यमतुलं मच्छासनात् सत्वरम् ॥ २० ॥

[9]यो जायाङ्गरुचा विचित्रितलसत्तेजा विभाति द्युस-
द्राजाद्यानत सर्वकाम्यदपदाम्भोजाद्य स त्वं विभो ।

1 सतामोघाय शंभो शरन्मेघाभालमवाङ्गराजदनुकम्पौघाद्य शंभो पदा—M.
2 Writing is not clear in M.  3 शिवं—M.
4 बाचामादरतो यमेति जगतामाचार्यम—M.  5 मे—A.
6 जनिसंकोचाय—M.  7 स—A.  8 °वाहावली°—M.
9 यो जागर्ति चराचरात्मकजगद्बीजायिताच्छो द्युसद्राजा°—M.

भो[1] जातादरमीश देहि कृपयाव्याजामजस्रं[2] जग-
द्धीजातीव तवाङ्घ्रिभक्तिमतुलां राजार्धचूडेश्वर ॥ २१ ॥

संजातप्रणयं सदैव[3] तरुणीपुञ्जान्तरे मूढ हे
किं जाल्माटसि दुर्विनीत हृदय त्वं जागरूकं भृशम्[4] ।
यं जानन्ति सुखैकहेतुममराः कंजाक्षमुख्याः परं[5]
तं जानीहि परायणं पशुपतिं कंजार्धचूडोज्ज्वलम् ॥ २२ ॥

प्रज्ञावद्भिरतीव तत्त्वमतुलं जिज्ञासुभिर्यः सदा
यज्ञाद्यैः परिसेव्यते सुकृतिभिर्विज्ञानरूपः शिवः ।
अज्ञानान्धतमःकदम्बतपनावज्ञातकालादरात्
सज्ज्ञानं त्वमुमेश देहि नितरामज्ञाय मह्यं विभो ॥ २३ ॥

खाटाधीशमुखैर्निषेवित सुरैश्चेटायमानैस्त्रयी-
घोटाध्यूढ महीरथोत्तम जटाजूटास्थिताभ्रापग ।
कीटाद्याखिलजन्तुरक्षक विभो कूटायितोर्वीधरेट्-
कूटाद्येश्वर देव पालितनमत्कूटाशु मां पालय ॥ २४ ॥

चेटीभूतचतुर्मुखादिदिविषत्कोटीशिरःप्रोल्लस-
त्कोटीरोज्ज्वलदिव्यरत्नकुलभाधाटीविराजत्पदम् ।
पाटीरादिलसच्छिवाकुचतटीकोटीविलीढोरसं
शाटीभूतमृगाजिनं मुनिमनःपेटीधनं भावये ॥ २५ ॥

1 मे—A.

2 व्याजानपेक्षं सदोमाजाने तव पादभक्तिमतुलां राजार्धमौले पराम्—M.

3 Writing is not clear in M.

4 मुदा—M.

5 विभुं—M.

दुष्टा यस्तु पुरो ददाह जगतोऽनिष्टापनुत्त्यै [1]परं
तुष्टा यं कृतिनो भजन्ति गिरिजाश्लिष्टाङ्गकं यन्मुदे ।
इष्टाद्यं वृषमाचरन्ति सततं शिष्टा भृशं यत्र सा
दृष्टा भाति दयालुता वितनुतामिष्टार्थसिद्धिं स मे ॥ २६ ॥

स्रष्टाभूत् करुणां प्रपद्य जगदुत्कृष्टाद्यतः पद्मभूः
पुष्टा येन दयाब्धिना त्रिजगती हृष्टा परं राजते ।
नष्टाज्ञानहृदन्तरैर्मुनिवरैर्जुष्टाङ्घ्रिपद्मो भव-
क्लिष्टान्तःकरणस्य मे स तनुतात् कष्टापनोदं शिवः ॥ २७ ॥

शुण्डालास्यषडास्यनन्दक नमत्षण्डाखिलैनस्तम-
श्चण्डांशो मणिकुण्डलद्युतिलसद्गण्डानुकम्पाम्बुधे ।
तुण्डाब्जाटदुमाकटाक्षमधुपाखण्डात्मरूपोडुराट्-
खण्डालंकृतमस्तकाभयददोर्दण्डाव मामादरात् ॥ २८ ॥

सोढारं निखिलागसां श्रुतिशिरोगूढार्थमाहुर्बुधा
वोढारं जगतां च यं मुनिमनोलीढाङ्घ्रिपद्मद्वयम् ।
ऊढा येन नगात्मजा नतरुजागाढान्धकारारुणो
मूढायाशु स मे प्रयच्छतु धियं प्रौढामतीवेश्वरः ॥ २९ ॥

क्षोणावाविरभूद्धनंजयपरित्राणाय भिल्लात्मना[2]
बाणाद्यर्चितपद्द्वयो वसति यः प्राणात्मना जन्तुषु ।
स्थाणावेव ममान्वहं च रमतामेणाश्रितात्युल्लस-
[3]त्पाणावानतखेदतूलकमहाप्राणायिताङ्घ्रौ मनः ॥ ३० ॥

[1] शिवाश्लिष्टार्धाङ्गमुपैति . . . मतिसंतुष्टादराद् यन्मुदे—M.
[2] क्षीणानन्दभवत्रसज्जनपरित्राणाय बद्धादरो—M.  [3] °पाणावाश्रित°—M.

क्षोणी यस्य रथोऽभवत् पुरजये वाणीपतिः सारथि-
स्तूणीरो जलधिर्हरस्य सुमनःश्रेणीष्टकर्तुर्विभोः ।
क्षोणीध्रोऽपि शरासनं सुरनदी वेणी विराजज्जटं
बाणीभूतहरिं तमीडितुमलं वाणी मदीया कथम् ॥ ३१ ॥

पुण्यात्मोद्यपदं जगन्मदकरीट्सृण्यायितेच्छं भवा-
रण्याग्निं लघु यत्स्मितार्चिषि [1]पुरैस्तृण्यायितं तं भवम् ।
पुण्याल्युत्तमभूषणप्रविलसन्मण्याढ्यगात्रं सुधा-
घृण्यापीडमुपास्महे हृदि सदागण्यातुलप्राभवम् ॥ ३२ ॥

पाता यो यमुमाप येन रविभूराताडि[2] यस्मै तपो-
जातानि प्रभवेऽर्पयन्ति सुकृतिव्राता हि यस्मात् प्रजाः ।
जाता यस्य हरस्य सारथिवरो धाता स यस्मिन् भृशं
ख्याता सर्वदयालुता स भगवान् दाता सुखस्यास्तु नः ॥३३॥

श्वेताभ्रव्रजगर्वभञ्जनरुचिर्भूताधिपः संसृते-
र्भीतानामभयंकरः सुरगणैर्गीतापदानावलिः ।
वाताशाधिपभूषणोज्ज्वलतनुर्जातादरं लोकसं-
त्राता वृत्तिमिमां व्यपोहतु परां मे तामसीमीश्वरः ॥ ३४ ॥

पूतान्तःकरणार्चितस्य मकुटानीतान्तरिक्षापगा-
शीतांशोः परिरब्धभूमिधरराड्जाताङ्गभास्वत्तनोः ।
आताम्राभिविसारिकान्तिनिकरक्रीताम्बुजं तस्य मां
वीतांहोव्रजमीश्वरस्य तनुताद् धृतान्तकं पद्द्वयम् ॥ ३५ ॥

[1] पुरा—A. [2] प्राताडि—M.

यन्तारं जगतां बुधाः पशुपतिं[1] संतापविध्वंसिनं
संतानायितपादमिष्टभरणेऽनन्तादिसंसेवितम्[2] ।
हन्तारं च पुरां नगाधिपभुवो[3] रन्तारमाहुर्विभुं
तं तावत् सततं भवाख्यजलधेः संतारणार्थं भजे ॥ ३६ ॥

दान्ता [4]यं हि विभावयन्ति नितरां शान्ता महायोगिनः
स्वान्ताब्जे [5]शिवमादरेण च सदा चान्तार्तखेदं परम् ।
कान्ताश्लिष्टकलेबरो[6] भवमहाकान्तारसंचारिणं
शान्तातङ्कमिमं तनोतु भगवान् मां तादृशः शंकरः ॥ ३७ ॥

श्रान्तानां भवकाननेऽसि शरणं क्षान्तानतागाः[7] समा-
[8]क्रान्तानेकविधप्रपञ्चदुरितध्वान्तार्क शंभो ततः ।
त्वां तापत्रयभञ्जनं [9]परमहं श्रान्तावनं रोहिणी-
कान्तापीडमहं श्रितः[10] शिव भवान्मां तारयाशु प्रभो ॥ ३८ ॥

त्यक्ताहंकृतयोऽपि यं मुनिवराः शक्ता न वेत्तुं[11] विभुं
व्यक्ताव्यक्तमनन्तमाद्यमगजायुक्तार्धगात्रं शिवम् ।
मुक्ता यत्करुणाकटाक्षलहरीसिक्ता [12]भृशं यत्पदा-
सक्तान्तःकरणा बुधास्तमनिशं भक्तानुकम्पं भजे ॥ ३९ ॥

[1] यमतुलं—M.
[2] Writing is not clear in M.
[3] हन्तारं सकलापदां गिरिभुवो—M.
[4] यं खलु—M.
[5] विभुम्—M.
[6] °तनुर्हरो—M.
[7] क्षान्ताश्रितागाः—M.
[8] °क्रान्तानेकजनान्तरङ्गदुरित°—M.
[9] कृतपरिश्रान्तावनं—M.
[10] उपाश्रितः—A.
[11] तापसवराः शक्ता न यं वेदितुं—M.
[12] यदीयार्चनासक्ता धन्यतमाः—M.

दृप्ता येन [1]पुरोऽल्पहासशुचिना तप्ताः क्षणादेव भी-
र्लुप्ता नाकनिवासिनां त्रिजगती गुप्ता दयाम्भोधिना ।
[2]सप्ताबद्धसुरापगः पशुपतिः सप्ताश्वनक्षत्रराट्-
सप्तार्चिर्नयनो जवादवतु नः क्लप्तार्तलोकावनः ॥ ४० ॥

[3]मस्तारोपितचन्द्र मोहबलतो ग्रस्तात्मचेताः परं
दुस्तार्ये भवसागरे पशुपतेऽधस्तान्निमग्नं दृढम् ।
त्रस्तावल्यभयप्रदानविदधद्धस्ताशु चोत्तार्य [4]मां
ध्वस्तातङ्कमिमं विधाय कुतुकं विस्तारयार्यापते ॥ ४१ ॥

कृत्याकृत्यविवेकशून्यहृदयोऽगत्या भवाब्धौ भ्रमन्
मत्या त्वां नहि पारयाम्यचलया सत्याहमाराधितुम्[5] ।
नत्या[6] केवलया भजाम्यगवरापत्याधिप त्वं समु-
द्धृत्यार्तं करुणाकराशु शिव मामत्याहितात् पालय ॥ ४२ ॥

नित्यानन्दमयः सदैव मुनिसंतत्या विरिञ्चादिम-
स्तुत्यात्मीयपदाम्बुजो[7] हृदि महानत्यादरान्मृग्यते ।
श्रुत्याम्रेडितवैभवाय विभवे सत्यात्मने संततं
भृत्यातङ्कमहान्धकारनिवहादित्याय तस्मै नमः ॥ ४३ ॥

दैत्यारिप्रमुखार्चिते मुनिमनो वेत्त्यादरादिष्टदे
यात्यामृष्टविनम्रसंसृतिमहाभीत्यादिके यत्पदे ।

1 पुरः स्मितार्चिषि परिक्षिता हि तत्तेजसा सतानां द्युसदां . . . भीर्लुप्ता—M.
2 गुप्तानेकविधप्रपञ्चनिवहः सप्ता°—M.
3 मस्तारूढमदाद्रिवैरिनिवहग्रस्तानतीव प्रभो दुस्तारे—M.
4 नो ध्वस्ताधीन् विरचय्य भूरि—M.
5 मत्याराद्धुमलं न चास्म्यचलया सत्या परं त्वां विभो—M.
6 नुत्या—M.
7 अभीप्सितकृत्पदो—M.

भात्यानन्दमयश्च यः पशुपतिः कात्यायनीशोऽञ्जसो-
पेत्यापद्यनुकम्पया स भगवान् प्रीत्या च मां रक्षतु ॥ ४४ ॥

वृत्रारिप्रमुखा भजन्ति निखिलाः सत्रातिभक्त्या सदा[1]
सत्रासा गिरिशं मृकण्डुमुनिराट्पुत्रार्तिहं यं परम्[2] ।
यत्रातीव मनांसि भान्ति कृतिनां चित्रात्मकृत्ये परे
हृत्त्रासाद् भवजाद् दयाब्धिरिह मां स त्रायतामीश्वरः ॥ ४५ ॥

नेत्राग्निक्षपिताङ्गजो जयति यो नेत्रायिताशो जग-
न्नेत्रा [3]येन हताः पुरः शतजगन्नेत्रातितेजस्विना ।
धात्राद्यैर्विनयात् सदैव कलितस्तोत्राय विश्वात्मने
गोत्राधीश्वरकन्यकाश्रितलसद्गात्राय तस्मै नमः ॥ ४६ ॥

यं त्रातारमुदाहरन्ति सुमहामन्त्रार्थलक्ष्यं बुधा-
स्तन्त्राणामपि संप्रवर्तकमलं यन्त्रावलीनामपि[4] ।
हन्त्रा येन पुरां कृताः सुरगणाः संत्रासहीनाः[5] परं
नन्त्रार्तिक्षपणेन तेन जगतां यन्त्रा सनाथोऽस्म्यहम्[6] ॥ ४७ ॥

वित्तेशादिसुहृज्जनाय नितरां[7] दत्तेप्सितार्थ प्रभो
कृत्तेष्टावलिसंसृतिद्रुमतते[8] मत्तेभचर्माम्बर ।
यत्तेऽगस्त्यमुखा भजन्ति हृदि यद्धत्ते सरोजद्युतिं
चित्ते मे स्फुरतु प्रकाममनिशं[9] तत्ते शिवाङ्घ्रिद्वयम् ॥ ४८ ॥

[1] च यं—M.
[2] पुत्रार्तिविध्वंसिनम्—M.
[3] अभक्षि विषं च येन हि—M.
[4] यन्त्रार्तिविध्वंसिनम्—A.
[5] हन्त्रा येन कृतोऽसतां सुरगणः संत्रासहीनः—M.
[6] . . . . देव दयाम्बुधे गिरिश स त्वं त्राहि मां सत्वरम्—A.
[7] सततं—M.
[8] विभो—M.
[9] अतुलं—M.

श्रुत्वा सद्गुरुभाषितं हृदि [1]परं धृत्वा तदत्यादरा-
द्भित्वाज्ञानपरंपरामरिगणान् [2]जित्वाशु कामादिमान् ।
भित्त्वा चाशु हृदब्जकोशमनिशं तत्त्वात्मकं तत्र यत्
तत्त्वाद्यं विभु वस्तु साम्बमतुलं धृत्वा सुखी स्यां कदा ॥ ४९ ॥

[3]हत्वा मोहमदादिदुर्जयमहासत्त्वान् भवारण्यगान्
गत्वा चाशु गिरीशमाद्यमतुलं नत्वा मुहुः शंकरम् ।
कृत्वा मूर्ध्नि दृढाञ्जलिं [4]सविनयं स्तुत्वा पुरस्तस्य तु
स्थित्वाहं सुखतस्तृणाय विबुधान् कृत्वा कदा स्यां कृती ॥ ५० ॥

यः स्थाणुर्भगवान् निरन्तरसुखावस्थानमिन्द्रादिमान्
स्वस्थानाशु ररक्ष चान्धकमुखान् प्रस्थाप्य याम्यं पुरम् ।
दुःस्थानाद्विषयान्निवृत्य तरसा हृत् स्थापयित्वा नता-
वस्थाजालहरस्य तस्य चरणे स्वस्था भवामः कदा ॥ ५१ ॥

यो दाता सकलश्रियां प्रतिदिनं पादाब्जमासेदुषां
श्रीदानन्दविवर्धनस्त्रिजगतीखेदापहः शंकरः[5] ।
वेदार्थप्रतिपाद्य क्लृप्तविनतामोदाद्य संसाररुङ्-
नोदायेश भव प्रभो मम हृदाह्लादाय स त्वं क्षणात् ॥ ५२ ॥

मन्दाकिन्यधिवासभासुरजटं बृन्दारकानीतस-
न्मन्दारादिसुमस्रवन्मधुरसस्यन्दार्द्रपादाम्बुजम् ।

[1] Writing is not clear in M. [2] हत्वा—M.

[3] जित्वा विघ्नकरान् विवेकबलतो गत्वा पदं शंकरं
नत्वा भक्तिवशादुमेशमनिशं स्थित्वा च तत्संनिधौ—M.

[4] हृदि परं स्मृत्वा तमिष्टार्थदं स्तुत्वाहं—M.

[5] अखिलजगत्खेदापनोदोद्यतः—M.

तं दासायितविष्टपं परचिदानन्दात्मकं योगिनां[1]
वृन्दानन्दनमीश्वरं शुभकरं वन्दामहे सादरम् ॥ ५३ ॥

यं दीव्यन्निजकान्तिसंततिझरीबन्दीकृतार्कप्रभं
नन्दीशार्चितमामनन्ति परमस्यन्दीति[2] च ब्रह्म सत् ।
तं दीनावनतत्परं हृदि भजन्निन्दीवरेट्छेखरं
मन्दीभूतभवामयश्च परमानन्दी कदा स्यामहम् ॥ ५४ ॥

यं देवं मुनयो भजन्ति गतहृत्संदेहमत्यादरात्
कुन्देन्दुस्फटिकप्रभं प्रणिपतद्वृन्देप्सितार्थप्रदम् ।
[3]तं देव्याश्रितवामभागमधुनाहं देवराजार्चितं
वन्दे भक्तदयापरं पशुपतिं मन्देतरश्रेयसे ॥ ५५ ॥

यद्यार्त विषये भ्रमन्तमिह सत्पद्यामलब्ध्वा सदा-
विद्याक्रान्तमुपेक्षसेऽखिलजगद्धृद्याद्रिजानाथ माम् ।
अद्यान्यं कमुपैमि देव शरणं मद्याचनां कस्त्रयी-
विद्यागोचर पूरयेद् वद वियन्नद्यात्तमौले विभो ॥ ५६ ॥

हृद्राज्याद् भगवन् ममारिनिवहान् क्षुद्रानवार्यान् परं
छिद्रान्वेषणतत्परानतिखलान् रुद्राशु कामादिमान् ।
विद्राव्येश विधाय तेऽङ्घ्रिजलरुण्मुद्रामिहार्यापते
भद्राकार चिरं गिरीश वस चिद्भद्रासनाधिष्ठितः ॥ ५७ ॥

[1] शंकरं स्कन्दालंकृतभास्वराङ्कमतुलं—M.

[2] स्पन्दीति—M.

[3] तं देहार्धलसच्छिवाङ्कमनिशं मन्देतरश्रेयसे
वन्दे शाश्वतमादरेण सुमनुच्छन्दे चरन्तं शिवम्—M.

यो [1]धात्रीधरवर्यकूटविलसत्सौधाधिवासी विभु-
वेधा नीरजलोचनः शिव इति त्रेधा बुधैरुच्यते ।
आधारेण सुरास्तु येन जगतां बाधाविहीनाः सदा[2]
मेधामाशु स मे करोतु परचिद्बोधानुकूलां शिवः ॥ ५८ ॥

रुद्धाः प्राक्तनकर्मणाद्य विषये बद्धादरा मायया
विद्धाः [3]संसृतिसंभ्रमज्जनिमतामुद्धारके त्वत्पदे ।
सिद्धादिप्रणुते प्रपद्य शुभदे शुद्धात्मलभ्ये शिव
श्रद्धाभक्तियुता भवेम भगवन् सिद्धाभिलाषाः कदा ॥ ५९ ॥

किं धावस्यभितोऽपि मानस वचः संधार्य मे चित्तभू-
गन्धानेकपकेसरिण्ययि कृपासिन्धावतीवादरात् ।
त्वं धातृप्रमुखार्चिते वस भवाध्यन्धाश्रितार्तिच्छटा-
रुन्धाने चिरमीश्वरे गिरिसुताबन्धावुदारे सुखम् ॥ ६० ॥

बुद्ध्या निर्मलया मुनीन्द्रनिवहैरध्यात्मविद्यापरै-
र्यद्ध्यापन्नभयापहं[4] बहुतपःसिद्ध्याप्तये सादरम् ।
अध्यास्याङ्घ्रियुगं मनस्यविरतं निध्यायते ते विभो
विध्याद्यर्चित साम्ब मे कुरु मनस्तद्ध्यानसक्तं सदा ॥ ६१ ॥

[5]येनापालि पुरा मृकण्डुतनयः कीनाशदर्पच्छिदा
यो नालीकभवादिक्लृप्तसुयशोगानानुरक्तः शिवः ।

[1] धात्रीवर—M. [2] आधारो जगतां प्रपन्नजनताबाधापनोदोद्यतो—M.
[3] भूरिभवाम्बुधौ विलुठतामुद्धारके त्वत्पदे—M. [4] °तमोपहं—M.
[5] Verse 62 is omitted and 63 is given as 62; *pāda* 1 of 62 is *pāda* 2 in M.

नानातङ्कनिदानसंसृतिरुजा दूनानिमान् नः प्रभो
का नाम त्वमुपेक्षसे यदिह ते दीनानुकम्पप्रथा ॥ ६२ ॥

यो नागाभरणः प्रपन्नजनमुद्दानानुरक्तः परं[1]
येनासर्जि महात्मना जगदिदं नानाविधं पाल्यते ।
सूनास्त्रस्मयभञ्जनेन भवरुङ्म्लानार्तिविध्वंसिना
श्रीनाथाक्षिसरोजपूजितपदा तेनानुकम्प्योऽस्म्यहम् ॥ ६३ ॥

स्नानाराधनहोमदर्पणजपध्यानादिसत्कर्मभि-
र्हीनायार्थतृषाटते तत इतो मानादिकं मुञ्चते ।
भो नार्याश्रितगात्र मोचितनतात्येना विभो त्वं परं
सेनानीप्रिय सुप्रसीद भगवन् ज्ञानादिशून्याय मे ॥ ६४ ॥

[2]अन्या भूतपतेस्तु या दिवि च वावन्यामनोकास्थिता
जन्यातङ्कविलङ्घना न खलु ता मन्यामहे देवताः ।
धन्या यत्पदसेवका भवमहावन्यादवं यं विदु-
र्मुन्याराधितपद्द्वयं तमगराट्कन्याश्रिताङ्गं भजे ॥ ६५ ॥

कापालीयविभूषणं नतमहातापापहाङ्घ्रिद्वय-
व्यापारं परमेश्वरं मुनिवरैर्द्वैपायनाद्यैर्नुतम् ।
तापापोहनतत्परं त्रिजगतां[3] चापायिताद्रिं कृपा-
कूपारं प्रणमामि संततमहं श्रीपार्वतीवल्लभम् ॥ ६६ ॥

[1] शिवो—M.
[2] अन्या श्रीपरमेश्वराद् दिवि च येऽवन्यामनेके स्थिता
जन्यातङ्कहरान्न चासुररिपून् मन्यामहे तान् पुनः—A.
[3] तापार्तावनतत्परं पशुपतिं—M.

योऽपास्तानतलोकभीर्जयति यत्कोपाकुलालीकदृग्-[1]
दीपार्चिष्यवशो भृशं शलभतामापारविन्दाशुगः ।
[2]शापास्त्रार्चितसत्त्वमीश्वरजगद्रूपाद्य मायामहा-
कूपादाशु दयाम्बुधे पशुपते भो पालयोद्धृत्य माम् ॥ ६७ ॥

कल्पान्तोज्ज्वलभीष्मपावकशिखाकल्पातितीव्र-
प्रभानल्पावार्यविषाग्निशोषणयशोजल्पाककण्ठद्युते ।
कल्पाद्यस्मयहृत्पदाय गिरिराट्तल्पाय भस्मोज्ज्वला-
कल्पायाखिललोकहर्षकरसंकल्पाय तुभ्यं नमः ॥ ६८ ॥

आभात्यद्रिसुताप्रियो नतमनःक्षोभापनोदोद्यतो
यो भारत्यधिपादिगेयसुमहालोभार्थरक्षाप्रथः ।
आभा यस्य परां रुचं प्रहसति प्राभाकरीमम्बुरु-
ण्नाभाराध्यपदाम्बुजो भवतु मे लाभाय स श्रेयसाम् ॥ ६९ ॥

[3]डम्भाहंकृतिवर्जितात्मसुलभं यं भार्गवीशस्वभू-
जम्भार्यादिसुरा भजन्ति मुनयोऽहंभावहीनाः परम् ।
तं भाव्युद्भवहानये श्रुतिशिरःसंभाव्यमार्यापरी-
रम्भातिस्फुरदङ्ककं हृदि सदाहं भावये शंकरम् ॥ ७० ॥

कुम्भीन्द्राजिनधारिणं मृगधरं कुम्भीभवाराधितं
कुम्भीपाकनिवासहेत्वघहरं कुम्भीनसालंकृतिम् ।

1 °साध्वसो जयति यत्कोपोज्ज्वलत्फालदृग्—M.
2 शापानुग्रहकृन्मुनित्रिदिवसत्सोपान . . . चि-
द्रूपाद्य त्वमुमेशसंसृतिमहाकूपादवोद्धृत्य माम्—M.
3 डम्भामर्षविवर्जित°—M.

गम्भीरोरुभवाब्धिवाडवमलं यं भीममाहुर्बुधा-
स्तं भीतौघभयापहं हृदि भजे स्तम्भीकृतक्ष्वेडकम् ॥ ७१ ॥

किं भोगैर्नयसे वृथैव दिवसान् रम्भोरुभिर्वञ्चित
त्वं भोगीशशयार्चितं निगमवाग्गुम्भोह्यमानं परम् ।
अम्भोजासनभाव्यमानमतुलं दम्भोलिभृद्वन्दितं
शंभोरङ्घ्रिसरोरुहं भज मनः शं भो भजस्व द्रुतम् ॥ ७२ ॥

शुभ्रा यस्य रुचिर्विभोरपहसत्यभ्रावलीं शारदीं
बिभ्राणं कथयन्ति यं भववने विभ्राम्यतः प्राणिनः ।
श्वभ्रादाशु भवाभिधादवतु मामभ्रापगावीचिका-
विभ्राण्मौलिरगात्मजार्धतनुभाविभ्राजमानः[1] शिवः ॥ ७३ ॥

कामापूरणतत्परं प्रणमतां [2]भीमार्तिहं यं नगेड्-
धामानं स्फटिकेन्दुशङ्खविलसद्धामानमाहुर्बुधाः ।
हेमाद्रीशशरासनः स भगवान् रामाश्रितात्युल्लसद्-
वामाङ्गः करुणापयोधिरनिशं मामाशु पायाच्छिवः ॥ ७४ ॥

[3]कामादिस्मयभञ्जनानतजनक्षेमावहाद्य प्रभो
सोमार्येश कृपाकर श्रुतिशिरःसीमायिताङ्घ्र्यम्बुज[4] ।

1 °तटो नतौघभरणेऽदभ्रानुरागः—M.

2 . . . . . . भीमार्तिविध्वंसकृ-
न्नामात्यद्भुतवैभवो मुनिवरैः सामादिभिः संस्तुतः ।
रामाभीष्टतनुः परः सुजनहृद्धामा महाश्चर्यकृद् .
भूमा योऽवतु शंकरः प्रतिदिनं मामादरादीश्वरः ॥ ७४ ॥—M.

3 कामादिद्विषदोघखिन्नहृदयक्षेमावहार्यप्रभो सोमाद्येश—M.

4 अङ्घ्रिद्वय—M.

[1]त्वामाहुर्भवरोगपीडितजनस्तोमार्तिविध्वंसिनं[2]
मामार्तं त्वमुपेक्षसे पशुपते सोमार्धमौले कथम् ॥ ७५ ॥

[3]यः स्मार्यो यमुपासते मुनिगणा भस्माशु येनाङ्ककं
तत् स्मारं कृतमामनन्ति विबुधा यस्मा अलं नो परः ।
यस्माद्यस्य तुलापि नास्ति भुवनादस्मान्न[4] यस्मिन् भिदा
तस्मादस्तु निरन्तरं पशुपतेरस्माकमीशात् सुखम् ॥ ७६ ॥

यो मीनध्वजभञ्जनोऽखिलजगत्स्वामी महायोगिहृद्-
गामी दीनजनौघरक्षणपरः सामीन्दुचूडो विभुः ।
श्यामीभूतशिरोधरं तमनिशं [5]त्वामीश निःश्रेयसं
कामी शंकरमादरेण शिरसा नौमीप्सितार्थप्रदम् ॥ ७७ ॥

गेया यस्य महात्मनः श्रुतिगिरामेया गुणा योगिभि-
र्मायामुक्तहृदम्बुजैः सुकृतिभिर्ज्ञेया यदीयाकृतिः[6] ।
जायार्धाङ्गसमन्वितप्रविलसत्कायार्धभागो भवा-
पायादाशु स मामनाथमतुलः पायादजस्रं शिवः ॥ ७८ ॥

वर्या यं हि विभावयन्ति यमिनां[7] पर्याप्तभाग्या मनो-
दर्यामादरतोऽविलङ्घितवचोमर्यादमिष्टार्थदम् ।
निर्याते शमितुं विषे सुमनसां धुर्याविरासाशु यः
कुर्याददिसुताप्रियः स भृशमैश्वर्याणि मह्यं शिवः[8] ॥ ७९ ॥

[1] °मोहित° for °पीडित°—A. [2] °स्तोमाभयोत्पादकं—M.

[3] यः स्मार्यः श्रुतिरेति यं विरचितो भस्माशु येनाक्षिणा
सस्माराङ्गभवो नमांसि कुरुते यस्मा अतो नोऽपरः—M.

[4] अस्माच्च—M. [5] त्वामीश्वराहं यशःकामी—M.

[6] तनुः—M. [7] यन्ति तपस्विनां यमनिशं—A.

[8] हर्यादिप्रणुतः स मेऽतिकुतुकं कुर्यादजस्रं शिवः—M.

आर्यानाथ दयासमुद्र भगवन् [1]नार्याप्त मायातमः-
सूर्यास्माकमियं प्रभो गिरिश वाग् धार्या त्वया चेतसि ।
कार्यास्मासु दया नितान्तमरयो वार्या हि कामादयो
दार्या देव भवाम्बुधेः पशुपते तार्या वयं सत्वरम् ॥ ८० ॥

आरामं [2]पतितावनत्वयशसं दाराश्रिताङ्गं दया-
सारापास्तनतार्त्यवग्रहभयं हारायितास्थ्यावलिम् ।
आराध्यं मुनिसत्तमैर्हृदि शरद्धाराधरश्रेणिका-
गौराभं सततं विभुं श्रुतिनदीपारायिताङ्घ्रिं[3] भजे ॥ ८१ ॥

चोरा मे सुमनोऽपहृत्य च महासारा हि कामादयः
क्रूरा मां व्यथयन्ति हा भवमहाकारागृहे शत्रवः ।
मारारे भवमोचनेश्वर कियद्वारानहं वच्मि मा-
मारादेत्य कटाक्षनिस्रुतकृपापूराशु[4] पाहि प्रभो ॥ ८२ ॥

स्मेरास्यः पतितावनः श्रुतिशिरःसारायिताङ्घ्र्यम्बुजः
सूराभापहसद्रुचिः पशुपतिर्यो राजते शाश्वतः ।
तारानाथकलातिभास्वरजटाभाराय तस्मै चिदा-
कारायाकलये महर्षिहृदयादूराय तस्मै नमः ॥ ८३ ॥

वैरी यः शमनस्य सज्जनमनश्चारी महेशः कृपा-
वारीशो भगवान् विभाति सुतरामुरीकृतार्तावनः ।
भूरीष्टानि तनोतु नित्यमतुलो दूरीकृताघव्रजो
[5]गौरीशः सकलप्रपञ्चभरणे पारीण आद्यः स मे ॥ ८४ ॥

[1] तार्याघ—M.
[2] सुयशः प्रसूनविततेः—M.
[3] श्रुतिशिरःसारायितं—M.
[4] कृपादृशाशु जगदाधाराद्य—M.
[5] गौरीशोऽखिललोकपालनकलापारीण—M.

योऽलावीन्मदवारणं नततमस्तूलानलः[1] शंकरः
कालारिर्भवसिन्धुमग्नजनताकोलायिताङ्घ्रिद्वयः ।
कैलासाचलवासिने त्रिजगतीपालाय[2] तस्मै नम-
ज्जालाभीष्टफलप्रदाङ्घ्रिसुमनःसालाय कुर्मोऽञ्जलिम् ॥ ८५ ॥

हेलावारितविश्वशोषकमहाहालाहलोग्रानल-
[3]ज्वालायामरसंघहर्षविदधच्छीलाय विश्वात्मने ।
[4]कोलाकारकहर्यलभ्यनिजपन्मूलाय शैलाधिभू-
शालायाकलयेऽञ्जलिं शिव महाकालाय तुभ्यं सदा ॥ ८६ ॥

यो लीलाजितमन्मथो घनकृपाशाली विभुर्गूढप-
न्माली येन रिपुव्रजात् सुरगणोऽपालीश्वरेणादरात् ।
शूली मोहजुषो व्यपोह्य तरसा शालीनतां स श्रुति-
व्यालीढो [5]निजपद्द्वये वितनुतां मे लीनमीशो मनः ॥ ८७ ॥

प्रालेयाचलकन्यकाश्रिततनो फालेक्षणाद्य त्रयी-
वेलेष्टार्थददत्पदाम्बुज हरिच्चेलेश्वरात्यादरात् ।
नीलेन्दीवरबन्धुकंधरविभो बालेन्दुलेखालस-
न्मौले मामव तादृशे च चरमे काले दयाम्भोनिधे ॥ ८८ ॥

कालेऽयं कलिनावृतोऽघनिलयः कालो भृशं निर्दयो
भो[6] लोकेश भवाम्बुधेरसुलभा कूलोपलब्धिः[7] परम् ।

[1] तूलाशुगः—A.
[2] अखिलजगत्पालाय—M.
[3] ज्वालायाखिलदेवताप्रमदकृत्—M.
[4] कोलात्माच्युतमृग्यपादयुगली°—M.
[5] स्वपदद्वये—M.
[6] हे—M.
[7] असुकरं कूलोपयानं—M.

आलोच्येत्थमतीव मेऽद्य हृदयं व्यालोलमास्तेतरां[1]
बालोऽहं बत किं करोमि तरसा शैलोद्भवेशाव माम् ॥ ८९ ॥

[2]कल्याणीरमणस्तनोतु नितरां कल्याणमिष्टार्थदः
कल्याणाचलकार्मुको विनतहृच्छल्यापहो मे विभुः ।
कल्यातङ्कहरः सदैव सुतपःकल्यात्मवित्तापसा-
वल्याराधितपादपद्मयुगलोऽतुल्यात्मभूमेश्वरः ॥ ९० ॥

सेवा यस्य भवाधिभीतजनताजीवातुरेनोऽटवी-
दावाग्निं यमुदाहरन्ति करुणास्वावासभूमिं बुधाः ।
देवाधीशनुताय शश्वदसितग्रीवाय [3]सर्वात्मने
जीवानामभयंकराय महते देवाय तस्मै नमः ॥ ९१ ॥

निर्वाणैकनिकेतनं [4]त्रिजगतीसर्वार्तिविध्वंसकं[5]
गुर्वाद्यैर्निखिलैर्यदुग्रचरितं[6] स्वर्वासिभिर्गीयते ।
दुर्वारो गरलानलो भगवता निर्वापितो येन भोः
शर्वाशु त्वमुमासहाय नितरां कुर्वादरान्मे मुदम् ॥ ९२ ॥

गुर्वीशानमहीधरं भुजबलादुर्वीत उन्मूलयन्
गर्वी येन निपीडितो दशमुखो निर्वीर्यमाक्रन्दयन्[7] ।

1 आलोच्येत्थमजस्रमीश नितरामालोलमस्मन्मनो—M.

2 कल्यार्तिं हरति क्षणात् सुजनहृच्छूलात्मिकां यद्दया-
कुल्या यत्पदसेविनां भवनदी कुल्यायते भक्तितः ।
कल्याणाद्रिधनुर्धरोऽमितरसाशैलोद्भवेशाव मां
. . . तनोतु नितरां कल्याणमीशः स नः ॥ ९० ॥—M.

3 सत्प्रीतिकृद्भावायाखिलरूपिणे शिव महादेवाय—M.

4 त्रिजगतां—M.

5 °विध्वंसिनं—M.

6 यदीयचरितं—M.

7 एवाभवत्—M.

खर्वीभूतभवाधिरेत्य जनतादर्वीकरालंकृतिं[1]
कुर्वीश त्वमुमापते मयि कृपां गुर्वीमनन्याश्रये ॥ ९३ ॥

अव्यादिष्टफलप्रदः पशुपतिः पव्यायुधाद्यर्चितो
रव्याभो भगवान् जटान्तरलसद्दिव्यापगः शंकरः ।
अव्याजं सततं कृपाजलनिधिर्भव्यं करोत्यादरात्
अव्यात्मप्रभवाश्रितप्रविलसत्सव्यार्धगात्रः स माम्[2] ॥ ९४ ॥

दीव्यन्नाकिशिरोमणिद्युतिलसत्सेव्यं यदङ्घ्र्यम्बुजं[3]
भाव्यं योगिवरैश्च येन[4] तरसालाव्यन्तकस्य स्मयः ।
श्राव्यं यस्य विचित्रपुण्यचरितं [5]सोऽव्यन्तवासी शिवो
देव्यङ्गार्धलसत्तनुर्भवतु मे भाव्यङ्गविच्छित्तये ॥ ९५ ॥

[6]आशापूरणतत्परस्य नमतामाशाधिपत्यं कृपा-
लेशाद्यस्य शतक्रतुप्रभृतयः श्रीशार्चितस्याभवन् ।
ईशानं प्रणतौघचित्तजलरुट्कोशाब्जबन्धुं जग-
त्क्लेशापोहनतत्परं भवमहापाशापहं तं भजे ॥ ९६ ॥

पूषाब्जाग्निविलोचनाय महते भूषायमाणैः परं
शेषाद्यैर्भुजगाधिपैः प्रविलसद्वेषाय लोकात्मने[7] ।

1 °भवा यदाश्रितजना दर्वीकरालंकृते—M.

2 सव्याकृतिर्मां प्रभुः—A.

3 अङ्घ्रिद्वयं—M.

4 शमेन—A.

5 यो—M.

6 आशापूर्तिकरस्य यस्य नमतामाशाधिपाः सत्कृपा-
लेशादिन्द्रमुखा निरस्तनिखिलक्लेशा विधूतारयः ।
दाशाकारभृदर्जुनेऽभ्रभरणे कोशायिताभ्रः स मा-
मीशानः प्रणतौघचित्तजलरुट्कोशारुणोऽव्यात् सदा ॥ ९६ ॥—M.

7 सर्वात्मने—M.

एषा मेऽस्तु कृता नतिर्नतमनस्तोषावहायादराद्[1]
योषारत्नगिरीन्द्रजाविरचिताश्लेषार्धगात्राय ते[2] ॥ ९७ ॥

प्रासार्ता विरसा चमत्कृतिपदोल्लासादिहीना परं
हासार्हा निरलंकृतिः पशुपते या[3] साहितिर्भूपतिम् ।
आसाद्याशु तदीयचित्तकमलोच्छ्वासाय सा[4] स्यात् कथं
[5]सोऽसावीश्वर किं[6] वदाद्य हृदयाश्वासाय मे[7] त्वां विना ॥९८॥

भासा निर्जितसूर्यकोटिरतुलो दासायमानैः सुरै-
र्योऽसावाश्रितपद्द्वयो बहुकृपावासायितापाङ्गकः ।
व्यासाद्यैर्विनुताय क्लृप्तगरलग्रासाय हेमाचले-
ष्वासायाकलये सदा हृतनुतत्रासाय तस्मै नमः ॥ ९९ ॥

संसाराकुलचेतसामपि हृदा पुंसामगम्यं जग-
द्धिंसातत्परदुर्मदत्रिपुरविध्वंसात्तकीर्तिस्मितम् ।
यं साधुव्रजमानसाम्बुजवनीहंसायमानं विदु-
स्तं [8]साम्बं सततं नमामि शिरसाहं सादरं शंकरम् ॥ १०० ॥

आस्याभाजितचन्द्रमा मुनिगणाशास्याद्भुतानन्दकृ-
ल्लास्यासक्तमनाश्च यो हृदयभूशास्यार्तरक्षापरः[9] ।
हास्यापास्तपुरस्य तस्य [10]तव पद्दास्यानुरक्तः प्रभो
[11]भोः स्यामीश कदा नु दुष्टविषयेऽपास्यादरं शंकर ॥ १०१ ॥

[1] विनिर्मिता नतमनस्तोषाय शंभोऽञ्जलिः—A. [2] °श्लेषाय तुभ्यं सदा—M.
[3] सा—A. [4] भो—M. [5] मे—A. [6] को—M.
[7] सः—A. [8] साद्रीशसुतं—M. [9] यो गिरिवरावास्यार्त°—M.
[10] शिव ते दास्यानुरक्तं प्रभो—M.
[11] मे स्याद्दुर्विषयानुरागमधुनापास्यानिशं मानसम्—A.

देहालंकृतनागभूषणभरं वाहायितप्राक्तन-
व्याहारं सदयं नमद्भवमहामोहापहं शंकरम्[1] ।
ईहामात्रविनिर्मितत्रिभुवनं गेहायिताद्रीश्वरं
नीहाराद्रिसुताप्रियं कृतसुरव्यूहावनं भावये ॥ १०२ ॥

ऊहं त्वत्पदबुद्धये कलयितुं सोऽहं कथं शक्नुयां
गाहंगाहमवार्यमेव विषये साहंतमस्मन्मनः[2] ।
हा हन्ताटति किं करोमि विनमद्भीहन्तरीशान[3] स-
स्नेहं त्वं कुरु सर्वदा मयि कृपां भो हंसवाहार्चित ॥ १०३ ॥

ताळाभैकनगात्मजाकुचतटीचोळायितालंकृति-
व्याळाधीशफण प्रभो प्रशमितक्ष्वेळाशु मे त्वं नय ।
श्रीळानाथनुते भवव्यसनतो डोळायमानं मनो
व्याळानेकपमीशभक्तहृदि भेडाळानके त्वत्पदे ॥ १०४ ॥

नाळीकायितकेशवः प्रणमतां योऽळीकविध्वंसकृ-
न्नाळीकप्रभवादिमादितिभुवामाळीभिराराधितः ।
हेळीन्द्वग्निविलोचनं पशुपतिं काळीपतिं[4] संसृति-
व्याळीवित्रसदाप्तपालनकलाकेळीपरं तं भजे ॥ १०५ ॥

यक्षाद्याखिलखेचरार्चितपदे दक्षाध्वरध्वंसिने
वृक्षागाब्धिमहीजनात्मकजगद्रक्षापरायादरात् ।

[1] मोहापनोदोद्यतम्—M.
[2] अस्मिन् मनः—M.
[3] भीहन्तृपादाब्ज—M.
[4] कालीप्रियं—M.

ऋक्षाधीशकलाधराय नितरामुक्षाधिवाहाय ते
शिक्षात्रस्तयमाय भूतपतये त्र्यक्षाय कुर्मोऽञ्जलिम् ॥ १०६ ॥

वीक्षाशिक्षितमीनकेतुमनिशं मोक्षार्थदानाध्वरे
दीक्षातत्परपद्वयं[1] विधिसहस्राक्षादिभिर्वन्दितम् ।
दाक्षायण्यधिपार्कवह्निनयनं[2] दाक्षायणीवल्लभं
प्रेक्षावद्धृदयाब्जभावितपदं साक्षात्करोमीश्वरम् ॥ १०७ ॥

अक्षोभ्योग्रभवार्तपालनकलादक्षोऽनुलिप्ताद्रिजा-
वक्षोजद्वयमुद्रितप्रविलसद्वक्षोऽभिरामः प्रभुः ।
स क्षोणीध्रगृहो ममाशु दुरितं प्रक्षोदयित्वाखिलं
[3]रक्षोनाथनुतस्तनोतु नमतां हृत्क्षोभहारी मुदम् ॥ १०८ ॥

शंभो **वेङ्कटसुब्ब** एष भवरुग्भीत्येत्थमत्यद्भुता-
स्थान त्वत्सुगुणौघवारिधिकणस्तोत्रं परं तारकम् ।
अष्टप्रासयुताष्टकाधिकशतश्लोकैरतानीत् प्रभो
स्वामिंस्त्वं परिगृह्य[4] सादरमिदं रक्षानुकम्पानिधे ॥ १०९ ॥

[इति श्रीजप्येशाष्टप्रासशतकं समाप्तम्]

---

1 दीक्षासक्तपदद्वयं—M.
2 °पाभगात्रमतुलं—A.
3 रक्षोराज°—M.
4 प्रतिगृह्य—M.

# ३२. जलकण्ठेश्वरशतकम्[1]

शिवरामकृष्णसुधीकृतम्

[2]वाणीशप्रमुखाखिलामरशिरोराजत्किरीटाञ्चल-
प्रोतस्फूर्जदमन्ददिव्यमणिभाभास्वत्पदाम्भोरुहम् ।
कुन्देन्दुद्युतिजिष्णुपादनखरप्रोद्यत्प्रभासुन्दरं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ १ ॥

कारुण्यार्द्रकटाक्षवीक्षणलवैरुद्गाढनिर्मापित-
त्रैलोक्यं स्फुरदभ्रवारणगतिं [3]देवासुरैर्वन्दितम् ।
सेवानम्रसुरेन्द्रमौलिमधुपव्यालीढपादाम्बुजं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ २ ॥

उन्मत्तद्विपराजपर्वतमहादम्भोलिधारावहं
निर्वेलोदयमद्वयं सुरुचिराकारं कृपाशेवधिम् ।
वैयाघ्रीं त्वचमायतां चटपटध्वानां वसानं कटौ
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ३ ॥

नानावेदशिरोभिरुन्नतगुणैः संवेद्यमुद्यत्प्रभं
कैलासाचलसौधसीम्नि सततं खेलन्तमुच्चैस्तराम् ।
अच्छाभी रुचिभिर्दिशामपि मुखं कुर्वन्तमापाण्डरं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ४ ॥

[1] Based on the single MS. No. VB 440. Two folios (7, 8) of the MS. are broken of which two pieces are lost; thus there are lacunas in the verses 52 to 66.

[2] श्रीजलकण्ठेश्वरस्वामिने नमः—in the margin of the MS.

[3] लेखावली°—first written and then bracketed in the MS.

नीहाराचलकन्यया सह तया नित्यं समालिङ्गितं
नित्यानन्दमनन्तमादिरहितं श्रीनीलकण्ठं शिवम् ।
यक्षेशाय निधिप्रदं निजपदानम्राय मुक्तिप्रदं[1]
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ५ ॥

आधारादिषु मण्टपेषु च मिथो भिन्नेषु नानात्मना
नानाशक्तिभिरन्वितस्तनुभृतां देहाभिधाने पुरे ।
नाड्या यस्तु सुषुम्नया परिचितस्तद्ब्रह्मरन्ध्रंगतो
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ६ ॥

येनानाहि जटाकटाहकुहरे गङ्गा च तत्तादृशी
येनादाहि ललाटनेत्रदहनस्यार्चिर्निकायैरजः ।
यस्याङ्घ्री भजते जनाय जगतीश्लाघ्या ददाते श्रियो
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ७ ॥

यस्य स्मेरकटाक्षवीक्षणबलात् त्रैलोक्यसंरक्षणं
संप्लोषस्तिसृणां पुरामिव पुनस्तस्य क्षणाज्जायते ।
यस्मादस्य समुद्भवश्च पृषतां वारामिवाधीशितु-
र्वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ८ ॥

यः कालं प्रपिपेष यं गिरिसुता शिश्लेष येन स्मरो
निर्दग्धः परमार्थशास्त्रकुशला यस्मै नमस्कुर्वते ।
यस्मान्नान्यदिदं च यस्य कलया यस्मिन् पुनर्लीयते
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ९ ॥

[1] सायुज्यदं—original reading in the MS. but bracketed.

पाशग्रस्तशिरोधिमप्यथ निजस्वीयाङ्घ्रिपङ्केरुह-
द्वन्द्वार्चैकपरं मृकण्डुतनयं विश्वैकसाक्षी हि यः ।
सद्यः प्रोद्यदमन्दसंततकृपासारस्तथापालयद्
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ १० ॥

चन्द्रार्कानलविद्युतः सुरुचयो यस्यांशभासाश्रिताः
चेष्टन्ते यदनुप्रवेशवशतः सत्यं जगन्त्यञ्जसा ।
यद्बोधाय मुनीश्वराश्चिरतरं तीव्रं तपः कुर्वते
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ११ ॥

यः कल्पद्रुममूलभूतलमलंकुर्वंश्चतुर्भिः स्वकै-
रिष्टार्थाभयकृष्णसारपरशून् हस्तैर्दधानः क्रमात् ।
वामाङ्गस्थितयोमया कृतपरीरम्भोत्सवः शोभते
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ १२ ॥

यः शुद्धस्फटिकोपमेन वपुषा सर्वा दिशः शोभयन्
सोमास्कन्दविनायकः सह गणैः कैलासशैलाङ्गणे ।
देवैर्विष्णुपुरोगमैरपि यथाकालं मुहुः सेव्यते
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ १३ ॥

जात्यन्धोऽपि महाजडोऽपि विगलत्प्राणोऽपि निःस्वोऽपि वा
रोगार्तोऽपि भयाकुलोऽपि सुतरां प्राप्तोऽपि कष्टां दशाम् ।
यत्सेवासमकालमेव लभते वाञ्छानुकूलं फलं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ १४ ॥

यत्पादाम्बुजदर्शनाय स हरिः पाताललोकानधः
प्राविश्याभिगवेषयन्नपि मनागप्राप्य कामं पुनः ।

आगत्यारमहं जडोऽस्म्यतितरामित्युक्तितः पूज्यते
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ १५ ॥

वेधाः सर्वचराचरव्रजविधादक्षोऽपि यन्मस्तका-
लोकाय स्फुटमूर्ध्वलोकमखिलं गत्वापि भूयः पतन् ।
अश्यत्केतकसङ्गतोऽनृतगिरा स्थानार्चनैर्वर्जितो[1]
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ १६ ॥

यः सर्वं सचराचरं जगदिदं निर्माति नर्माणि च
प्रापय्यावति तत् पुनश्च समये यः संहरत्यन्ततः ।
सृष्ट्यादित्रयसाक्षिमात्रकतया यः केवलो वर्तते
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ १७ ॥

यश्चैकोऽखिलभूतसंततिगुहागूढः प्रकाशात्मको
ऽप्युच्चैर्व्याप्य जगन्ति राजति परिच्छिन्नोऽपि यः प्राणिषु ।
कर्माध्यक्षतया स्थितो भवति यः साक्षी परं निर्गुणो
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ १८ ॥

द्रष्टापि स्वयमस्य यस्तु जगतः सर्वस्य नो दृश्यते
मन्ता यस्तु न मन्यतेऽपि विबुधैः श्रोतापि न श्रूयते ।
वक्ता न स्फुटमुच्यते क्वचिदपि ज्ञातापि न ज्ञायते
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ १९ ॥

ऋग्भिर्यं मखिनो मखेषु नियताः शंसन्ति मन्त्रैः पुनः
सद्द्रव्यैर्यजुषां यजन्ति विलसद्गानैश्च यं सामभिः ।

[1] त्याजितो—written and struck off in the MS.

ब्रह्माद्याः किल संस्तुवन्ति यदनुध्यानादपास्तैहिका
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ २० ॥

योऽन्तः स्थावरजङ्गमेषु च बहिश्चोर्ध्वं विराजत्यधः
कर्ता कारयिता क्रियापि च हविर्बोद्धा च बोध्यश्च यः ।
बोधश्च प्रभवन्त्यमन्दमतयो यद्वेदनप्रोद्यमा
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ २१ ॥

यद्बोधाय किलाचरन्ति सुमहत् तीव्रं तपो योगिनो
यागं भूपरिचङ्क्रमं निरशनं तीर्थाभिषेकं मुहुः ।
दानानि प्रथितानि षोडश महाराजाश्च भोगत्यजो
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ २२ ॥

केचिद्धन्यतमाः स्थिरा अपि गृहे सद्देशिकोक्त्या स्फुटं
श्रुत्यन्तार्थमनन्तसौख्यगमकं भूयस्तरां जानते ।
गाहन्तेऽपि च पुण्यतीर्थनिकरं यस्य प्रसादात् परं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ २३ ॥

यं ध्यायन् मनसि क्षणं गिरिजया गाढोपगूढं प्रभुं
सस्कन्दं सविनायकं सुरगणाध्यक्षं महोक्षाश्रयम् ।
स्वाराज्यं च चराचरस्य भजते सर्गादिषु प्राभवं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ २४ ॥

यत्पादाम्बुरुहार्चनं सविनयं स्वस्येक्षणाम्भोरुहा
पद्मस्थानजुषा विधाय भगवान् नारायणस्तत्क्षणात् ।
भक्ताग्रेसरतामवाप्य सरसीजाताक्षतामभ्यगात्
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ २५ ॥

वेदान्ता निखिला यमेव परमात्मानं समाचक्षते
यत्तत्त्वावगमाय निश्चितधियो मुह्यन्ति नानागिरा ।
शुद्धं बुद्धमनन्तमुज्झितगुणं शंसन्ति यं चागमा
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ २६ ॥

कोपव्याकुलितेन दारुकवने संस्थास्नुना भूसुर-
व्रातेनेरितयोर्महाबलयुजोः शार्दूलमत्तेभयोः ।
उत्पाट्योद्वमनीयतां विदधतीं यः पर्यधत्त त्वचं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ २७ ॥

शत्रून् मारयताभिचारविधिना प्रोत्साहितो हव्यवाट्
क्षोणीदेवगणैस्त्विषा दश दिशः साटोपमाहिण्डयन् ।
येनादाय करेण लोचनपदं निन्येऽधिफालान्तरं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ २८ ॥

यस्यागारति काननं पितृपतेरुच्चैर्मणीहारति
ग्रीवायां फणिनां कुलं हिमकरो बालः सदापीडति ।
भस्मालेपति दन्तिचर्म वसनत्युक्षा महान् वाहति
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ २९ ॥

येनादाहि पुरत्रयं मदनवद् येनोद्धृतं चन्द्रवद्
गङ्गाम्भः शिरसि प्रसर्पति तनौ यस्याहिराड् भस्मवत् ।
यस्य प्रीतिपदं भवत्यनुकलं नन्दीश्वरः स्कन्दवद्
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ३० ॥

शक्तिर्यस्य पुनस्त्रिलोकजननी माया परा शांभवी
सत्यज्ञानमयीश्वरी परशिवा दुर्गाम्बिका चण्डिका ।

इत्याख्या बहुधा पुराणनिगमख्याता जरीजृम्भते
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ३१ ॥

यस्माज्जन्म दिवो भुवश्च सवितुश्चन्द्रस्य वह्नेर्विधे-
र्विष्णोश्च त्रिदिवौकसां शतमखादीनां महातेजसाम् ।
सिद्धं सोम इति श्रुतिर्भगवती तत्र प्रमाणं महद्
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ३२ ॥

इन्द्राग्नी यममित्रमारुतहरिब्रह्मादिमुख्यान् सुरा-
नेकं यं परमामनन्ति बहुधा विप्रास्तु विज्ञानिनः ।
इन्द्रं मित्रमिति श्रुतिः सुमहती तत्रास्ति मानं महद्
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ३३ ॥

ध्यायन्तो हृदयारविन्दकुहरे यं साधुबुद्ध्या जनाः
पुण्यं स्वन्नमुपस्कृतं रसनया गृह्णन्ति षड्भी रसैः ।
अन्ये हन्त मलाशिनो गमनिका तत्रान्तरिच्छन्तिवाग्
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ३४ ॥

चण्डालोऽपि शिवेति वर्णयुगलं यद्वाचकं व्याहरन्
संभाषासहजाधिकार्ह इति हि ब्रूते श्रुतिर्जाग्रती ।
यश्चाण्डाल इति द्विजो यदि किल ब्रूयात् किमत्रोच्यतां
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ३५ ॥

श्रीकण्ठेति वृषध्वजेति गिरिजाकान्तेति भूताधिपे-
त्युग्रेति स्मरसूदनेति गिरिशेतीशेति शंभो इति ।
यन्नामानि सकृत् पठन्नपि जनः प्राप्नोति मोक्षश्रियं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ३६ ॥

पापानामधिवासभूरपि जनो यस्मिन् प्रभाभक्तिभा-
गेकं वा क्षणमाशु मुक्तदुरितध्वान्तो नितान्तोज्ज्वलः ।
योगीव प्रतिपद्य पश्चिमदशां प्राप्नोति दिव्यं पदं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ३७ ॥

यच्छुद्धान्तसदेशसह्यतनयातीरद्रुमालोकन-
ध्वस्ताशेषमहाघपञ्जरकुटीगाढावृतानां नृणाम् ।
तस्मिन्नेव जनुष्यतर्कितपदं ब्रह्मावबोधोत्सवो
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ३८ ॥

पादाम्भोरुहयोः सकृत्प्रणमनं यस्यादरात् कुर्वता-
मष्टैश्वर्यमुदारचारुकवितासाम्राज्यमुच्चैःपदम् ।
आयुष्मत्सुगुणात्मजत्वमुदयत्यन्तेऽप्यनन्तं सुखं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ३९ ॥

लोकानामपकारिणे निशिचराधीशाय मूर्ध्नो दशा-
प्युत्कृत्य स्वपदाम्बुजन्मयुगलीमभ्यर्चते यः पुरा ।
त्रैलोक्याधिपतामनन्यसदृशीं प्रादात् कृपाम्भोनिधि-
र्वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ४० ॥

यः स्वामी कुलदैवतं द्विजनुषां यश्च स्वयं ब्राह्मणः
सर्वेष्वम्बुधिकन्यकापरिबृढप्रष्ठेषु देवेष्वपि ।
त्वं देवेष्विति वेद एव गमको यस्यास्ति तत्राग्रहो
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ४१ ॥

यस्मिन् भक्तिमपास्तसर्वविषयः कृत्वा क्षणार्धं जन-
श्चित्ते ध्यायति चेन्नितान्तमलिनस्वान्तोऽप्यशान्तोऽपि सः ।

सद्यो मुक्तसमस्तबन्धनिकरः सर्वश्रियामाकरो
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ४२ ॥

यस्यापाङ्गविलोकभङ्गिकणिकापातान्निधीनां पति-
र्जातो वैश्रवणः सिताचलतटीमासेदिवानुच्चकैः ।
यन्नामस्मृतिलब्धतुङ्गविभवाः सर्वेऽपि दिक्पालका
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ४३ ॥

यस्योन्मत्तजलंधरासुरपतिप्राणापहर्तुः प्रभोः
कारुण्येन विजृम्भितेन स महाविष्णुश्च चक्रायुधम् ।
संप्राप्य प्रबलोद्धतानपि दनोः पुत्रान् निहन्त्यञ्जसा
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ४४ ॥

क्षीराम्भोनिधिमन्थनोत्थितजगन्निर्दाहिहालाहल-
ज्वालालीढमुकुन्दसेवितपदद्वन्द्वः कृपाशेवधिः ।
यस्तादृक्षमपि क्षणेन कबलीचक्रे विषं विस्तृतं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ४५ ॥

यस्य स्मेरललाटलोचनशिखालेशेन लग्नाः पुर-
स्तिस्रोऽपि प्रथितास्त्रिलोकहननक्रीडाधुरीणा अपि ।
हन्त प्राहुणिकाः कृतान्तनगरीसीम्नः क्षणेनाभवन्
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ४६ ॥

गङ्गा सापि पुरा भगीरथमहीपालार्थिता संभ्रमा-
दायान्ती सहसावलेपभरसंक्रान्तान्तरङ्गा भृशम् ।
यस्योन्नद्धजटाग्रसीम्नि पतिता कुत्रापि लीनाभवद्
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ४७ ॥

मत्तोऽप्युज्झितसत्क्रियोऽपि सततं धूर्तोऽपि सत्पूरुष-
द्रोहाचाररतोऽपि हन्त निधनं पित्रोस्तु कुर्वन्नपि ।
यल्लिङ्गक्षणसेवनेन सकलाघौघाज्जनो मुच्यते
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ४८ ॥

यस्मै द्रोहममर्त्यराजवचनप्रोत्साहितो मन्मथः
कर्तुं मूढमतिर्धनुष्यपि शरं व्यापारयन्नञ्जसा ।
सर्वेषाममृताशिनामपि पुरो भस्मावशेषोऽभवद्
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ४९ ॥

यल्लिङ्गे चुलुकोदकं सकृदपि क्षिप्त्वा विधिं विस्मरन्
बिल्वस्यापि दलं किमप्यहह चेत् तत्र क्षिपेद् देहवान् ।
स प्राप्नोति पुनर्भवं नहि भुवि व्याधोऽत्र दृष्टान्ततो
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ५० ॥

स्नानौपासनवेदशास्त्रकथिताचारप्रमत्तोऽपि वा
पञ्चानामपि वासभूरपि चिरादध्यूषुषामंहसाम् ।
यत्र क्वापि च पर्यटन् यमवशात् पश्येत् यदीशत्यसौ
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ५१ ॥

सूत्राणि प्रथिता[नि यस्य नटने ढक्को]त्थितान्यादितः
संशोध्यैव चतुर्दश स्वयमुदाहार्षीन्मुनिः पाणिनिः ।
सूत्रैरात्मकृतैः स्फुटार्थघटनां सुप्तिङ्पदव्याकृतिं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ५२ ॥

[यस्या]नुग्रहलब्धभूरिमहिमा पश्यत्पदस्तापसः
शास्त्रन्यायमुदाजहार सकलव्याहारसंजीवनम् ।

यत्पादाब्जयुगीनमस्कृतिबलाच्छ्रौती: ⏑ – – – ⏑ –
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ५३ ॥

दुर्वासाश्च पराशरश्च महतामाद्यो मुनिश्चाङ्गिराः
कण्वोऽत्रिर्भृगुगौतमौ कुशिकजश्चान्ये [महायोगिनः] ।
[यद्भ]क्त्या जगदुद्भवस्थितिलयेष्वव्याहतप्रोद्यमा
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ५४ ॥

यस्मिन्नीश्वरतामनन्यसदृशीमालोक्य सा [पार्वती]
– – – ⏑ ⏑ भक्तिभारभरिता प्रक्षोभितापि स्फुटम् ।
यस्तादृग्गुणगुम्भितां च दयितामर्धं निनायात्मनो
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ५५ ॥

– – – ⏑ ⏑ – ⏑ ⏑ ⏑ ⏑ – – – – ⏑ – – ⏑ –
कारुण्यामृतसारपूरितहृदश्लिष्येत् क्षणं प्राणिनि ।
स क्षोणीवलयेश्वरत्वमयते पा – ⏑ – – ⏑ –
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ५६ ॥

कण्ठे यस्य हि कालिमा धवलिमा देहेऽपसव्ये स्वके
सव्ये दीव्यति नीलिमा सुमहिमा यस्यैव मू[र्त्यष्टके] ।
[यन्नाम] श्रुतिमूर्ध्नि भाति तपसां सीमा सुधामा च यो
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तमणिम् ॥ ५७ ॥

गङ्गा यस्य चिराय राजति जटाजूटे[ऽगजार्धाङ्गके
सर्वाङ्गे]षु च भस्मधूलिरलिके नेत्रं ज्वलत्पिङ्गलम् ।
वैयाघ्रं वसनं पुनः कटितटे चर्म स्फुरत् कर्कशं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ५८ ॥

---गमयं महः सगरिमोत्तुङ्गे कुचक्ष्माधरे
मध्ये सक्रशिमोल्लसत्तरुणिम स्वाङ्गेषु सर्वेष्वपि ।
गात्रे नीलिमशालि चा ⏑⏑⏑------⏑- लोचने
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ५९ ॥

यस्य स्वात्मजयोर्द्वयोर्गजमुखः कश्चित् पुनः षण्मुखः
कश्चिद् गृह्यसमस्तसाधनचणो वन्दी ⏑--⏑- ।
--यस्य वधूटिकाकटुगणोदन्तं निशान्तं पुन-
र्वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ६० ॥

यल्लिङ्गं निखिलागमस्मृतिपुराणाद्येषु शास्त्रेषु च
----⏑⏑- चतु]र्भुजमुखप्रष्ठैः समाराधितम् ।
दृष्ट्वा दैववशात् प्रदोषसमये जन्तुर्भवान्मुच्यते
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ६१ ॥

कृत्याकृत्यविवेच-⏑⏑⏑-----⏑-न्नाभकः
पूजाविघ्नविधायिनं जनकमप्याहिण्ड्य चण्डः क्रुधा ।
यल्लिङ्गार्चनपुण्यराशिवशतश्चण्डेशतामा[प्तवान्]
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ६२ ॥

कश्चिद्बालकदारकः स्वभवनप्राप्तातिथिप्रीणनो
मध्याह्नेऽतिथिरूपिणः स जरठाकारस्य यस्याज्ञया ।
---⏑⏑-⏑--⏑ जनुषं हा हन्त माहात्म्यभू-
र्वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ६३ ॥

कुन्तीसूनुषु मध्यमेन सतपश्चर्येण संताडितः
कोदण्डेन वराहपोषणकृता मध्येशिरो -⏑- ।

– – – ⏑ बलोपलालितमनाः प्रीत्या शमस्मै ददौ
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ६४ ॥

आखेटव्यसनाकुलो वनचरो भ्रान्त्वा दिनान्ते मुहुः
श्रान्तः सा ⏑ ⏑ – ⏑ ⏑ ⏑ ⏑ ⏑ – बिल्वस्य यं मूलगम् ।
अभ्यर्च्यास्य शिफं गतो विलुलितैः पत्रैर्विमुक्तिं गतो
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ६५ ॥

यन्मूर्ति ⏑ ⏑ – ⏑ – ⏑ – मपि ध्यायन् जडोऽप्युच्चकै-
र्वाचामीश्वरतामवाप्य सकलग्रन्थार्थनिर्णायकः ।
प्रख्यातिं लभते परावर ⏑ – – – ⏑ – – – ⏑ –
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ६६ ॥

सौन्दर्यैकपरायणं मनसिजस्यैकान्तसंजीवनं
वेधाः कामपि सुन्दरीं सुरकृते सृष्ट्वा च दृष्ट्वा च ताम् ।
यल्ब्धुं तादृगनुद्रवन्मृगमयीं येनाशिराः कल्पितो
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ६७ ॥

यस्योद्यच्चतुरर्णवीजलमभूत् कण्ठोपकण्ठं गतं
भूयः कुक्षिगतावनाय पिबता तद्येन कण्ठे कृतम् ।
इत्यादीन् जलकण्ठतां प्रति बुधा हेतून् समाचक्षते
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम्[1] ॥ ६८ ॥

[1] The verse 110 below is written here as verse 69 and bracketed indicating that it is to be omitted. But no substituting verse is written and hereafter verses are numbered 70, 71 and so on.

आयन्तं हरिसेवनाय विलसद्रुद्राक्षभस्माङ्कं
पश्यद्भिः स्वमथालयं सुघटितद्वारं जडैस्तान्त्रिकैः ।
यद्ध्यानाद् विदधे क्षणेन विवृतद्वारं मुनिः कुम्भजो
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ६९ ॥

स्वां पत्नीमसुरालिपालनपरां निघ्नन्तमप्यच्युतं
दूरादेव समागतो भृगुमुनिर्भक्तेषु यस्योत्तमः ।
मर्त्यत्वं प्रतिपद्य दारविरही भूया इति प्राशपद्
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ७० ॥

क्षुभ्यत्तुङ्गतरङ्गसंघतटिनीसंघातसंघट्टितं
पाथोधिं यमयांचकार सहितं संघैर्महायादसाम् ।
रामो ब्रह्मचतुर्भुजादिदिविषद्वन्द्यस्य यस्य स्मृते
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ७१ ॥

यत्कारुण्यकटाक्षवीक्षणबलावष्टम्भवैयात्यत-
श्चक्रे सत्यवतीसुतः श्रुतिशिरःसूत्राणि मोक्षार्थिनाम् ।
आनन्दाय निरस्तसर्वविषयानन्दाय निर्यत्नतो
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ७२ ॥

ज्योतिःशास्त्रनितान्तरूढनिखिलादृष्टार्थनिर्णायक-
ग्रन्थव्याकृतिकृद् वराहमिहिरः ख्यातो यदाराधनात् ।
अन्ये केचिदतीन्द्रियार्थगमकप्रज्ञाः परज्ञानिनो
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ७३ ॥

यः संसारदवे दुरन्तविषयप्लोषोन्नते भ्रश्यता-
मुद्धाराय समेत्य शंकरपदं वैयासिकीनां गिराम् ।

भाष्यं जीवपरैक्यबोधजनकं शारीरकं निर्ममे
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ७४ ॥

आम्नायत्रितयं यतः श्वसितवत् प्रादुर्बभूव स्फुटं
सर्वार्थप्रतिपादकं द्विजकुलाचारप्रतिष्ठापकम् ।
विप्रान् यः स्वयमेव देशिकपदे स्थित्वा तदध्यापयद्
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ७५ ॥

क्रोधाद् यस्य सतीवियोगकलुषस्वान्तस्य रौद्राकृति-
र्भूत्वा मङ्क्षु कपर्दतः कटुतरः श्रीवीरभद्रः पुरा ।
दृप्यद्दीक्षितदक्षशिक्षणमधादूर्ध्वं सुरध्वंसनाद्
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ७६ ॥

यस्याज्ञावशगः क्रुधान्धहृदयः कापालिको भैरवः
क्षीराम्भोनिधिमध्यसीम्नि फणिराडुत्तुङ्गमञ्चेशयम् ।
संबोध्य स्वपदाभिघातकशया विष्णुं व्यधादाहतं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ७७ ॥

सौरं मण्डलमास्थितस्य महतो देवस्य यस्य त्विषा
गोपाद्यानि जगन्ति गाढतमसा बद्धानि बुद्धानि च ।
संपश्यन्ति समस्तवस्तुविततिं विभ्रंशितां तत्त्वतो
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ७८ ॥

यः सव्यादुदपादयन्निजतनोरंशात् सरोजेक्षणं
सृष्ट्यादौ कमलासनं सवनितं देवोऽपसव्यादपि ।
पश्चादेव चराचरात्मकमिदं रोम्णां गणेभ्यो जगद्
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ७९ ॥

यश्चोंकारमयः कखप्रभृतयो वर्णाः स्वराः षोडशा-
प्यासन् यत्कलया परादिमगिरां जन्मापि यस्मादभूत् ।
नादो बिन्दुरपि प्रभूतममलं सारस्वतं यन्मयं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ८० ॥

भूतानामपि पञ्चकं यदुदयं वायू रविश्चन्द्रमा
वह्निर्जिष्णुरिमे चरन्ति परितो यस्माद् भिया रोदसि(?सी) ।
मृत्युर्वृत्तिमशेषमारणचणामाशिश्रिये यद्गिरा
वन्दे तं जलकण्ठदेवमनिश वन्दारुचिन्तामणिम् ॥ ८१ ॥

ख्यातं ब्रह्महणोऽपि निष्कृतिपदं यन्नामसंकीर्तनं
यल्लिङ्गार्चनतः पदं विधिहरी सृष्टिस्थितीशं गतौ ।
यद्भक्त्या मुनिराचचाम कलशीजन्मा महाम्भोनिधिं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ८२ ॥

प्राप्ते वैदिकवैरिणा चिरतरं वादे स्वपित्रा समं
त्रैलोक्ये मिषति प्रतप्तकठिनां कार्ष्णायसीं पीठिकाम् ।
आरूढे हरदत्तयोगिनि कृपामाधत्त यस्तादृशीं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ८३ ॥

त्रैलोक्यद्रुहि राक्षसे दशमुखे स्वावासरूप्याचलो-
त्क्षेपव्यग्रभुजेऽपि सामवचनैरुच्चैरभिष्टोतरि ।
यः कारुण्यभरं गिरामविषयं गाढं निचिक्षेप यो
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ८४ ॥

तादृग्दुर्गतिदुःखिते दशरथापत्ये वनाभ्यन्तरे
प्रादुर्भूय पुरः स्वयं परुवके रत्नं यथाढ्यो भुवि ।

य: प्रीत्या निदधे तथा मनुवरं पञ्चाक्षरं शंकरं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ८५ ॥

कोदण्डं कनकाचलः शरवरः श्रीशः फणीन्द्रो गुणः
सूतः पङ्कजसंभवः शशिरवी चक्रे रथः काश्यपी ।
युद्धे यस्य पुरां तथापि हनने मन्दस्मितं कारणं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ८६ ॥

न्यग्रोधद्रुममूलभूम्नि वसतिः श्रीदक्षिणाशामुखः
सव्यं जानु तदन्यसक्थिनि चिरं विन्यस्य चिन्मुद्रया ।
मौनी बोधयति स यस्तु यमिनां तत्त्वं पदार्थं स्फुटं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ८७ ॥

यः सद्यस्तनदिव्यसौरभसुधासारेण देवद्रुहां
साहित्यस्य चिकीर्षयैव महिलाकारे हरौ कामुकः ।
शास्तारं समजीजनत् खलततौ वोढारमन्वर्थतां
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ८८ ॥

रुद्रप्रश्नविशिष्टवाक्यसमुदायाद्यन्तवर्ती नमः-
शब्दः सर्व उदारदिव्यमहिमश्लाघानिबद्धाशयः ।
शान्ताकाङ्क्षमनन्यदेवसदृशो यस्मिन् परं श्लिष्यते
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ८९ ॥

यत्पूजाविधिमाचचार नयनाम्भोजेन नारायणः
शूलोद्भिन्नललाटनिर्यदसृजा यस्मै वितेने बलिम् ।
भिक्षादानकृते स्वकं कमलभूर्यस्मै कपालं ददौ
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ९० ॥

सप्तानां यमिनां मतेन तुहिनक्षोणीधरो बन्धुभिः
साधँ मेनकया तया दयितया पर्लायुतैर्दैवतैः ।
यस्मै स्वां तनुजामदात् प्रणयिनीं संमन्य्य चार्धांशगां
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ९१ ॥

यस्याभून्नयनत्रयं भगवतो ज्योतिस्त्रयं भास्वरं
कल्पे फालगताक्षिकोणविलसज्ज्वालोत्थकालानलः ।
यः कारुण्यरसार्द्रदृष्टिकणिकोदञ्चद्रमावाक्पति-
र्वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ९२ ॥

जाग्रत्स्वप्नसुषुप्तिषु प्रतिदिनावस्थासु येनैकता-
मात्मानं प्रणयन्ति संततमहंब्रह्मास्मिवाचा बुधाः ।
प्रत्यक्षं भवसि त्वमेव परमब्रह्मेति यच्छ्रूयसे
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ९३ ॥

यत्र स्निह्यति मे मनः श्रुतियुगं शुश्रूषते यत्कथां
यद्धामैव दिदृक्षतेऽक्षियुगलं जिह्वा च तुष्टूषते ।
त्वग् घ्राणं परिरम्भणाय समवघ्राणाय यस्येहते
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ९४ ॥

कर्मब्रह्मपदार्थशब्दविवृतिः प्रख्यापिता जैमिनि-
व्यासोदारकणादपाणिनिमुखैराचार्यवर्यैः परम् ।
तेषां तत्कवनप्रचोदकपरिज्ञानं तु यन्मूलकं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ९५ ॥

वेदाश्च स्मृतयश्च यस्य नयनान्यासन् पुराणागमा
ब्रह्माण्डैकनिकेतनस्य हृदयं सर्वाणि शास्त्राणि तु ।

उच्चैर्व्याप्य चतुर्दशापि भुवनान्यातस्थिवांसं प्रभुं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ९६ ॥

उच्चैर्देशिकतामवाप्य सुमहान् देवोऽर्धनारीप्रभुः
शिष्याणां कृतिनां श्रुतिस्मृतिपुराणार्थोपदेशेषु यः ।
चिन्मुद्राः करपङ्कजेऽप्यभिनयन् विद्योतते सर्वतो
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ९७ ॥

प्राचार्यो गुरुदेशिकाविति महोपाध्याय आचार्य इ-
त्युत्कृष्टो जनकः पितेति परमो मन्त्रोपदेष्टेति च ।
यः संज्ञापदभेदतो हि बहुधा निर्दिश्यते पण्डितै-
र्वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ९८ ॥

नानाशास्त्रपरिश्रमादपि बहुग्रन्थालिवन्याभ्रमात्
संसारार्णवमज्जनादपि वधूपुत्रादिदुष्टाग्रहात् ।
निर्विण्णस्य विमुक्तये ह्युपदिशत्यन्ते य ओमक्षरं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ९९ ॥

भक्तानां समये कदाचन[पठेत ?]श्वासावधौ संनिधिः
प्रैषोदाहरणं शिवेति वचनं स्वस्य स्मृतिं वा हृदि ।
यः स्वामी घटयत्ययत्नमुदयत्कारुण्यपूरोर्मिलो
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ १०० ॥

शुद्धं बुद्धमबद्धमव्ययमजं दान्तं प्रशान्तं महः
कान्तं संततमन्तकारिमनघोदन्तं महान्तं परम् ।
नित्यं निर्मलमेकमाद्यमजडं सत्यावबोधात्मकं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ १०१ ॥

दुःखार्तेषु दयावता नतिकृतामानन्दवेणीकृता
प्रालेयाचलकन्यया विहरता चान्द्रीं कलां बिभ्रता ।
भस्मोद्धूलयता जगन्ति वहता येनात्तनाथा वयं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ १०२ ॥

ध्येयो यस्तु मुमुक्षुभिश्चिरतरं चित्ते निरस्तैषणै-
र्वन्द्यो भास्करमण्डले प्रविलसन्मूर्तिः फलार्थे च यः ।
यः सर्वैरभिनन्द्यते मुनिगणैः श्रीदक्षिणाशामुखो
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ १०३ ॥

नान्तो यस्य न जन्म चास्ति न पिता माता च न भ्रातरो
नो सन्ति क्वचन स्वसार उत न स्निग्धाश्च नो बान्धवाः ।
किंत्वेका दयितास्ति सर्वफलसंधात्री वपुर्हारिणी
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ १०४ ॥

आपो गन्धवहो विहायसमणिर्वैश्वानरश्चन्द्रमा
यज्वा भूमिरनन्तमित्यतितरामाम्नातभिन्नाभिधा ।
यन्मूर्तिः पुनरेकिकापि जगति प्रख्यातिमेत्यष्टधा
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ १०५ ॥

अन्विष्टे निखिलेऽपि वेदनिचये कुत्रापि न श्रूयते
यस्योत्पत्तिकथाथवा लयकथा साम्बस्य सर्वात्मनः ।
तत्तादृक्षमनादिमध्यनिधनं तापत्रयध्वंसिनं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ १०६ ॥

रुद्राक्षान् दधतं त्रिपुण्ड्रविलसत्फालं जटामण्डल-
श्लिष्यद्देवतरङ्गिणीशशिकलाचक्षुःश्रवोवल्लभम् ।

उन्मत्तप्रसवावतंसमुदयन्मन्दस्मितालंकृतं
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ १०७ ॥

भक्ताद् यस्य बिभेति मृत्युरिह यत्तत्प्रीतदेवायनं
मार्कण्डेयमुनिं विकृष्य यदनुध्यानैकबद्धाशयम् ।
कुप्यत्स्वामिपदाभिघातविदलद्वक्षःस्थलः प्रागभूद्
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ १०८ ॥

[1]**कावेरीपुरि** सह्यजातटभुवि प्राकारतः पूर्वतः
स्वामी कुम्भभवेन यः खलु पुरा संस्थापितः प्राक्तनः ।
तत्रत्यानवनीसुरानवनिपानन्यांश्च रक्षत्यसौ
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ १०९ ॥

यः **श्रीदोड्डय**भूमहेन्द्रहृदयं प्राविश्य संबोध्य च
त्रायस्व द्विजसंघमित्यतितरामाकारयित्वा च तम् ।
तत् तत्सेवनकैतवादनुदिनं कालद्वये त्रायते
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ११० ॥

यस्याभूत् तुहिनाचलेन्द्रतनया सा पार्वती वल्लभा
योगक्षेमविचारणेऽतिनिपुणा तस्याः सखी सह्यजा ।
नन्दी मन्त्रिवरः प्रभुः प्रतिदिनं छात्रः स **दोड्डेश्वरो**
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ १११ ॥

यस्य स्तोत्रमिदं पठन् विरचितं श्रुत्यर्थसंदानितं
मुक्त्यर्थं **शिवरामकृष्णसुधिया दोड्डेश्वरानुज्ञया** ।

[1] This verse is written as verse 69 and bracketed in the MS. and a note after verse 109 says that the verse must be taken as verse 110.

वाग्देवीमधिकां श्रियं च लभते विद्वज्जनैर्वन्द्यते
वन्दे तं जलकण्ठदेवमनिशं वन्दारुचिन्तामणिम् ॥ ११२ ॥

हृद्यान् द्वादशसंयुतं शतमपि[1]. . . .

---

## ३३. तत्त्वार्यास्तवः[2]

शिवकामसुन्दरीशं शिवगङ्गातीरकल्पितनिवेशम् ।
शिवमाश्रये द्युकेशं शिवमिच्छन्मा वपुष्यभिनिवेशम् ॥ १ ॥

गीर्वाणचक्रवर्ती गीश्चेतोमार्गदूरतोवर्ती ।
भक्ताशयानुवर्ती भवतु नटेशोऽखिलामयनिवर्ती ॥ २ ॥

वैयाघ्रपादभाग्यं वैयाघ्रं चर्म कंचन वसानम् ।
वैयाकरणफणीड्यं वैयासिक्या गिरा स्तुतं प्रणुमः ॥ ३ ॥

हाटकसभानिवासः शाटकतापन्नसकलहरिदन्तः ।
घोटकनिगमो मायानाटकसाक्षी जगत्पतिर्जयति ॥ ४ ॥

शैलूषराजमाद्यं मालूरप्रसवमालिकाभरणम् ।
पीलूपमोऽन्धुजीर्यच्छालूराभः कथं विजानीयाम् ॥ ५ ॥

कनकसभैकनिकेतं कठिनपुराणोक्तिसारसंकेतम् ।
नाराधयन्ति के तं नारायण्या युतं स्वतोकेतम् ॥ ६ ॥

[1] With this ends the folio 14 and the further portion is lost.

[2] Edited from the single MS. No. 73243 (D. C. No. 822). This is on the God Naṭarāja at Chidambaram.

तिल्लवने क्षुल्लवने पल्लवसंभिन्नफुल्लपुष्पघने ।
चिल्लहरीमुल्ललयन् वल्लभया भिल्लतल्लजो नटति ॥ ७ ॥

वैराजहृत्सरोजे वैराजाद्यैः स सामभिः स्तव्यः ।
वैराग्यादिगुणाढ्यैः वैराद्युत्सृज्य दृश्यते नृत्यन् ॥ ८ ॥

ढक्कानिनदैः सूत्राण्यङ्गदनादैरहो महद्भाष्यम् ।
व्याकरणस्य विवृण्वन् नृत्यति भृत्यान् कृतार्थयन् मर्त्यान् ॥ ९ ॥

नटनायक नटनाय क इह सुकृती नो तव स्पृहयेत् ।
मञ्जुलतामञ्जुलतामहिते वस्तुं च तिल्लवने ॥ १० ॥

अतिदुरितोत्तारकृते चिरधृतहर्षः सभापतिः सद्यः ।
अगणेयाघघनं मामासाद्यानन्दमेदुरो नटति ॥ ११ ॥

मत्पादलग्नजनतामुद्धर्तास्मीति चित्सभानाथः ।
ताण्डवमिषोद्धृतैकस्वाङ्घ्रिः सर्वान् विबोधयति ॥ १२ ॥

आपन्नलोकपालिनि कपालिनि स्त्रीकृताङ्गपालिनि मे ।
शमितविधिश्रीशरणे शरणा धीरस्तु चित्सभाशरणे ॥ १३ ॥

भिक्षुर्महेश्वरोऽपि श्रुत्या प्रोक्तः शिवोऽप्युग्रः ।
अपि भवहारी च भवो नटोऽपि चित्रं सभानाथः ॥ १४ ॥

नृत्यन्नटेशमौलित्वङ्गद्गङ्गातरङ्गशीकरिणः ।
भूषाहिपीतशिष्टाः पुनन्तु मां तिल्लवनवाताः ॥ १५ ॥

कनकसभासम्राजो नटनारम्भे झलंझलंझलिति ।
मञ्जीरमञ्जुनिनदा ध्वनियुः(?) श्रोत्रे कदा नु मम ॥ १६ ॥

पर्वतराजतनूजाकुचतटसंक्रान्तकुङ्कुमोन्मिश्राः ।
नटनार्भटीविधूता भूतिकणास्ते स्पृशेयुरपि मेऽङ्गम् ॥ १७ ॥

नटनोच्चलत्कपालामर्दितचन्द्रक्षरत्सुधामिलिताः ।
आदिनटमौलितटिनीपृषतो गात्रेऽत्र मे स्खलेयुः किम् ॥ १८ ॥

पश्यानि सभाधीशं कदा नु तं मूर्धनि सभाधीशम् ।
यः क्षयरसिकं कालं जितवान् धत्ते च शिरसि कङ्कालम् ॥ १९ ॥

तनुजायातनुजायासक्तानां दुर्लभं सभानाथम् ।
नगतनया नगतनया वशयति दत्त्वा शरीरार्धम् ॥ २० ॥

आनन्दताण्डवं यस्तवेश पश्येन्न चापि नृगणे यः ।
स च स च न चन्द्रमौले विद्वद्भिर्जन्मवत्सु विगणेयः ॥ २१ ॥

कामपरवशं कृत्वा कामपरवशं त्वकृत्वा माम् ।
कनकसभां गमयसि रे कनकसभां हा न यापयसि ॥ २२ ॥

नटनं विहाय शंभोर्घटनं पीनस्तनीभिराशास्से ।
अटनं भवे दुरन्ते विट नन्दसि न स्वभूमसुखम् ॥ २३ ॥

कलितभवलङ्घनानां किं करवै चित्सुखघनानाम् ।
सुमुदां सापघनानां शिवकामेश्याः कृपामृतघनानाम् ॥ २४ ॥

निनिलीये मायायां न विलीये वा शुचा परं लीये ।
आनन्दसीमनि लसत्तिल्लवनीधामनि स्वभूमनि तु ॥ २५ ॥

अधिहेमसभं प्रसभं बिसभङ्गवदान्यधन्यरुचम् ।
श्रुतगलगरलं सरलं निरतं भक्तावने भजे देवम् ॥ २६ ॥

सभया चित्सभयासीन्माया मायाप्रबोधशीतरुच्चेः ।
सुहिता धीः सुहिता मे सोमा सोमार्धधारिणी मूर्तिः ॥ २७ ॥

पत्या हेमसभायाः सत्यानन्दैकचिद्वपुषा ।
कत्यार्ता न त्राता नृत्यायत्तेन मादृशा मर्त्याः ॥ २८ ॥

भजतां मुमुक्षया त्वां नटेश लभ्यास्त्रयः पुमर्थाश्च ।
फललिप्सयाम्रभाजां छायासौरभ्यमाध्व्य इव ॥ २९ ॥

कञ्चुकपञ्चकनद्धं नटयसि मां किं नटेश नाटयसि ।
नटसि निरावृतिसुखितो जहि मायां त्वादृशोऽहमपि तत् स्याम् ॥ ३० ॥

आस्तां नटेश तद्यन्नटति भवानम्बरे निरालम्बे ।
त्वन्नटनेऽपि हि नटनं वेदपुराणागमाः समादधति ॥ ३१ ॥

वेधसि सर्वाधीशेऽमेधसि वा मादृशे सरूपकृता ।
रोधसि शिवगङ्गाया बोधसिरा काचिदुल्लसति ॥ ३२ ॥

हट्टायितं विमुक्तेः कुट्टाकं तं भजामि मायायाः ।
भट्टारकं सभायाः किट्टात्मन्यङ्गके त्यजन्ममताम् ॥ ३३ ॥

श्रीमच्चिदम्बरेशादन्यत्रानन्दताण्डवासक्तात् ।
ब्राह्मं लक्षणमास्ते कुत्रचिदानन्दरूपता देवे ॥ ३४ ॥

क्षुल्लककामकृतेऽपि त्वत्सेवा स्याद्विमुक्तिमपि दात्री ।
पीतामृतोऽप्युदन्याशान्त्यै स्याच्चित्सभाधिपामर्त्यः ॥ ३५ ॥

सत्यं सत्यं गत्यन्तरमुत्सृज्य ते पदापात्यम् ।
अत्यन्तार्तं भृत्यं न त्यज नित्यं नटेश मां पाहि ॥ ३६ ॥

षट्त्रिंशता तत्त्वमयीभिराभिः सोपानभूताभिरुमासहायम् ।
आर्याभिराद्यं परतत्त्वभूतं चिदम्बरानन्दनटं भजध्वम् ॥ ३७ ॥

इति श्रीतत्त्वार्यास्तवः संपूर्णः

---

## ३४. तारावलिस्तुतिः[1]

### वेङ्कटरामकृता

**अश्वि**ति निगमचतुष्के विश्वसृजाकलितसारथ्यम् ।
भूरथमारूढो यस्त्रिपुरं भसितं चकार हसितेन ॥ १ ॥

आ**भरणी**कृतभुजगं सेभमुखस्कन्दशैलराजसुतम् ।
तमहमजस्रं कलये हिमरुचिशकलोल्लसच्छिरसमन्तः ॥ २ ॥

गज**कृत्तिका** पटीयति भुजगपतिः कङ्कणायते यस्य ।
स जलजभवनप्रमुखैः सृजतादमरैः स्तुतो मम श्रेयः ॥ ३ ॥

कलयामि **रोहिणी**पतिकलया लसमानमस्तकं हृदये
अधिवटतरुमूलतटं रचितनिवासं शिवासमेतं तम् ॥ ४ ॥

करजलरुहतलगङ्गाविलस**न्मृगशीर्ष**मखिललोकगुरुम् ।
मुनिजनमधुकरनिकरश्रीपर्णं तं भजे सहापर्णम् ॥ ५ ॥

कोपाद्दग्धस्यापि स्मरस्य पुनरतनुजीवितमदाद्या ।
करुणामृतलहरीभिः पाया**दार्द्रा** शिवस्य सा दृष्टिः ॥ ६ ॥

[1] Based on the single MS. No. 74102 (D. C. No. 835).

तनयं **पुनर्वसु**मतो विद्रावयता व्यराचि मुनिसूनोः ।
येनैव भीतिशमनं तत्पदपङ्केरुहं भजे शंभोः ॥ ७ ॥

शातक्रतवशिलाभाघटिततनुर्भाति यद्व**पुष्य**म्बा ।
काली सार्वेदिकक्षणरुचिचययुक्तेव तं स्मरामि शिवम् ॥ ८ ॥

वक्षोजभारविजितक्ष्माधरनेतुर्जगन्मातुः ।
**आश्लेषा**न्मामानतवामतनुः कापि देवता पायात् ॥ ९ ॥

सशत**मखं** निर्जरसां बृन्दं पादारविन्दषट्पदताम् ।
यस्य दरीधर्ति सदाशिवं तमन्तश्चरीकर्मि ॥ १० ॥

शिरसा गङ्गापूरं **पूर**यितुं भक्तवाञ्छितमधाद्यः ।
तापसमानससारससविता सवितैव मे गतिर्जगताम् ॥ ११ ॥

वित्तपतिदत्तसख्योऽप्यात्तसुमत्तद्विपेन्द्रकृत्तिपटः ।
लीलानृत्तपटुर्मम मुत्तलिहरीं स**मुत्तर**ङ्गयतात् ॥ १२ ॥

मस्तकलसदिन्दुकलं समस्तकमलासनादिविबुधनुतम् ।
चिन्मुद्राञ्चित**हस्तं** वस्तु किमप्याविरस्तु मम मनसि ॥ १३ ॥

सव्यापसव्यतनुजटाभि**श्चित्रा** यदाकृतिर्भाति ।
यमुनासरस्वतीभ्यां सहिता गङ्गेव मां शिवः सोऽव्यात् ॥ १४ ॥

शंकर करुणाम्बुनिधे मम क्षम**स्वा**तिमात्रमपराधान् ।
प्रीणय मामिति सततं वदतां धन्यस्त्वतो भजे तमहम् ॥ १५ ॥

गजवदनं च **विशाखं** पार्श्वयुगेऽग्रे च नन्दिनं दधतम् ।
सुरवैणिकोपगीतं करवै स्मरवैरिणं मनसि साम्बम् ॥ १६ ॥

तनुरहितीकृतमदनोऽप्यनुमनुते स्माखिलस्य कर्ता यः ।
**अनु**षङ्गमङ्कके नगजनुषस्तनुतां शिवः शिवं स मम ॥ १७ ॥

प्राप्यानुग्रहममर**ज्येष्ठा**म्भोजाक्षशंकरा यस्य ।
जननावनसंहृतिषु प्रभवन्ति शिवाख्यमस्तु वस्तु मुदे ॥ १८ ॥

योऽलंकरोति वटतरु**मूलं** मुनिवृन्दवन्दितपदाब्जः ।
आलम्बे चरणाहतकालं तमहं सदाशिवं शरणम् ॥ १९ ॥

आ**पू राड**म्बुजभवमुखा मखाशा हलाहलात् त्रस्ताः ।
शरणं यमेव चरणं तस्य भजे भुक्तिमुक्तिकरणमहम् ॥ २० ॥

हृदय न समुपास्यन्तां धनो**त्तराड**म्भशालिनो भवता ।
किं तैः समुपास्येत स यद्येकः शंकरः प्रभुर्जगताम् ॥ २१ ॥

शंकरगुणगणवर्णनधन्यतमानां पुराणवचनानाम् ।
तनुतमभक्तेस्तनुतां **श्रवणे** श्रवणे कृताघसंहरणे ॥ २२ ॥

अयि मूत्रमिश्र**विष्ठा**कुलजननीजठरपिठरवासघ्नीम् ।
त्वयि चित्त भजति भक्तिं शंकरचरणे भवेत् कथं शोकः ॥ २३ ॥

**शतभिषग**धिपपरीतोऽप्यन्तकवश एव हन्त हि जनोऽन्ते ।
इति संचिन्त्य मनो यदि भवं भवघ्नं भजेर्भवेद् भविकम् ॥ २४ ॥

**पूरद्वादि**भिरञ्चितसौधासौ धातुराज्ञयात्रेति ।
धावंधावमलमलं गच्छतमङ्घ्री वराणसी[क्षेत्रम्] ॥ २५ ॥

न्यग्रोधमूलभवनं समाश्रये मुग्धशशिचूडम् ।
चिन्मुद्रयाञ्चितकरं परमं वाचः परं व्योम ॥ २६ ॥

यस्य वियत्पतदमृतभुगापगारुचिविजयदक्षिणा मूर्तिः ।
हृद्याविरस्तु वटतरुमूलनिवासी स दक्षिणामूर्तिः ॥ २७ ॥

अद्रावमोमयाधिकमुद्राजन् दक्षिणामूर्तिः ।
मुद्रां दधत् करतले विद्रावयतात् स मामकीं जडताम् ॥ २८ ॥

देयात् सोऽहिर्बुध्न्यः कायार्धलसन्महीधरेन्द्रसुतः ।
श्रेयांसि हृदय सततं याया यदि तत्पदाब्जभृङ्गत्वम् ॥ २९ ॥

तीरेऽवतीर्णमीशं तारेश्वरमौलिभूषणं गाङ्गे ।
नीरे कृतावगाहश्चीरेण पटी कदावद्रक्ष्यामि ॥ ३० ॥

तारावलिरिति रचिता तारावलिनाथमौलिनुतिरेषा ।
जीयाच्चिरस्य कविना वेङ्कटरामाभिधेन कृतिः ॥ ३१ ॥

---

## ३५. नटेशाष्टकम्[1]

### महादेवकृतम्

यथेच्छं यत्किंचित् प्रलप शिवनामापि तु सकृद्
यथाच्छन्दं वित्तं वितर शिवकार्येऽपि कणिकाम् ।
सदा स्वैरं भ्राम्य क्षणमपि शिवे तिष्ठ तदिदं
महादेवो जिह्वे कर हृदय दीनोऽर्थयति वः ॥ १ ॥

[1] Based on the single MS. No. 73243 (D. C. No. 928). The author may be identical with Mahādevakavi, author of the *Rāmamattebha* found in the same codex.

श्रीमत्सादाख्यमुख्याः परशिवतनवो वातुलाद्यागमोक्ता
विश्वेशाद्याः पुराणेष्वपि निगदिताः कोटिशः क्षेत्रभेदात् ।
कस्तासां तारतम्यं कथयतु यदधी वस्तुभेदं मिथो वा
देवं नान्यं तु चेतो मम कनकसभानायकादभ्युपैति ॥ २ ॥

मुक्तिं दिशाशु यदि वा क्षणमास्स्व किंचिद्
वक्तव्यमस्त्युदितवानिह लोकरूढ्या ।
आनन्दताण्डवसदानुभवाद् विभिन्ना
सा चेन्नटेश न कदापि मम प्रदेया ॥ ३ ॥

उद्यन्त्वङ्गे झटिति पुलकाः कस्य ते दिव्यकाया-
लोके तर्षो नहि सुकृतिनो रुन्धते मीनचक्षुः ।
बाष्पो जाड्यान्नयनमचिरोत्कण्ठितं मे तु रुन्धे
नाधःपातं भजतु स कथं बालशीतांशुमौले ॥ ४ ॥

आलम्बितुं निजपदाम्बुजमागतं मां
दूरादवेक्ष्य किमु मद् विजिगुप्समानः ।
मन्दं तदु क्षिपति हा यदि वा दयालु-
र्मूर्धानमेव पलितुं बत मे नटेशः ॥ ५ ॥

पुण्यं पापमिति व्यवस्थितिरियं पूर्वं त्वया या कृता
तामुल्लङ्घितवानसाविति मुधा क्रोधं कृथा मा मयि ।
यासौ ते करुणेति कापि सहजा सैव व्यवस्थामिमां
भङ्क्त्वा पुण्यकृतोऽघिनश्च सुतरां तुल्यं नटेशावति ॥ ६ ॥

उत्कर्षाणां त्वमसि सकलस्यापकर्षस्य चाहं
सीमा लोको भवति निखिलस्त्वावयोरन्तराले ।

एवं तौल्यं भजत इह मे नास्ति किंचित् त्वदर्थ्यं
याच्ञा पुंसां सदृशि नितरां युज्यते श्रीनटेश ॥ ७ ॥

नहि हितमहितं वा नाथ जानामि मूढ-
स्तदिह वरद याचे त्वां सभानाथ किं वा ।
सकृदवनतिमात्रात् सुप्रसन्नो दयालो
मम भवति हितं यत् तद् विधेहि त्वमेव ॥ ८ ॥

जटालुठत्स्वार्णदशम्बरस्य परास्तपुष्पायुधडम्बरस्य ।
भवाम दासा हरिदम्बरस्य गृहीभवद्दिव्यचिदम्बरस्य ॥ ९ ॥

इति श्रीनटेशाष्टकं संपूर्णम्

---

## ३६. रुद्रार्थसारस्तवः[1]

अरुणाद्रिविरचितः

श्रीहेरम्बमहं प्रणम्य शुभदं श्रीरुद्रभाष्यं परं
दृष्ट्वा तत्र यदर्थजातमखिलं निष्कृष्य पद्यात्मकम् ।
श्रीरुद्रार्थघनप्रदीपमखिलं शार्दूलवृत्तोज्ज्वलं
कुर्वे सज्जनचित्तरञ्जकमिदं रुद्रार्थसाराभिधम् ॥ १ ॥

[1] Edited on the basis of the single MS. No. VB 984. As the title implies, the Stotra is based on the Rudrapraśna of the *Taittirīya-saṃhitā*.

श्रीरुद्रामितमन्यवे तव नमः किंच त्वदीयेषवे
किंच त्वद्धनुषे नमस्तव भुजद्वन्द्वाय तुभ्यं नमः ।
यत्ते रुद्र शिवं धनुः शिवतमा चेषुः शरव्या शिवा
या ते रुद्र भवत्यपूर्णमपि तैर्मां रक्ष गौरीपते ॥

'नमस्ते रुद्रमन्यवे' इत्यारभ्य 'रुद्र मृडय' इत्यन्तमेकः श्लोकः ॥ २ ॥

या ते रुद्र शिवा तनूर्विजयते लोकेष्वनुग्राहिका
भक्ताभीष्टफलप्रदा पशुपते पुण्या जगत्पावनी ।
तन्वा शंतमया तया सरलया कैलासशैले सदा
स्थित्वा प्राणिसुखप्रदेश्वर दयादृष्ट्यानिशं पश्य माम् ॥

'या ते रुद्र शिवा तनूरघोरा' इत्यारभ्य 'तामिचाकशीहि' इत्यन्तमेकः श्लोकः ॥ ३ ॥

हस्ते रुद्र बिभर्षि यामिषुमरिव्याघातिनीं तां शिवां
कुर्वेसद्गृहपुत्रपौत्रमपि मा हिंसीश्च पश्वादिकम् ।
शंभो त्वां वचसा शिवेन गिरिश स्तौम्यस्मदीयं परं
सर्वं स्थावरजङ्गमात्मकमिदं क्षेमान्वितं त्वं कुरु ॥

'यामिषुं गिरिशंत हस्ते' इत्यारभ्य 'सुमना असत्' इत्यन्तमेकः श्लोकः ॥४॥

भक्तेभ्यः प्रियभाषणं वितनुषे शंभोऽधिवक्ता ततः
श्रेष्ठः सर्वसुराग्रणीर्भवभिषक् शार्दूलसिंहर्क्षकान् ।
वन्यान् ये च सुरद्विषो जगति तान् या यातुधान्यश्च ताः
सर्वा एव निषूदयन्नधिवदत्वसम्भ्यमिष्टं भवान् ॥

'अध्यवोचत्' इत्यारभ्य 'यातुधान्यः' इत्यन्तमेकः श्लोकः ॥ ५ ॥

योऽसावभ्युदयन् रविर्विजयते रक्तस्ततश्चारुणः
पश्चात् पिङ्गलवर्णकः शुभयुतो मार्ताण्डरूपी शिवः ।
ये पृथ्वीमभितः ककुप्सु सततं रुद्राः सहस्रं स्थिता-
स्तेषां रोषमहं नतिस्तुतिशतैर्नित्यं समुत्सारये ॥

'असौ यस्ताम्रः' इत्यारभ्य 'हेड ईमहे' इत्यन्तमेकः श्लोकः ॥ ६ ॥

यश्चण्डद्युतिमण्डलान्तरगतः श्रीनीलकण्ठः शिवो
विश्वात्मा परिसर्पति प्रतिदिनं पश्यन्ति तं गोपकाः ।
तेभ्यो मन्दधियस्तमेव ददृशुः सर्वोदहार्यो मुदा
दृष्टोऽस्माभिरजस्रमत्यतिशयं दद्यात् सदा नः शिवम् ॥

'असौ योऽवसर्पति' इत्यारभ्य 'मृडयाति नः' इत्यन्तमेकः श्लोकः ॥ ७ ॥

नीलग्रीव सहस्रनेत्र जगतीसेक्त्रे सुवृष्ट्या नमः
ये चास्य प्रमथादयः सुरगणास्तेभ्यो नमस्कुर्महे ।
तत् त्वं ज्यां शिथिलीकुरुष्व धनुषः कोट्योर्द्वयोर्या दृढं
बद्धा याश्च तवेषवः शिव करे प्रच्छादयस्वाशु ताः ॥

'नमो अस्तु नीलग्रीवाय' इत्यारभ्य 'परा ता भगवो वप' इत्यन्तमेकः श्लोकः ॥ ८ ॥

श्रीदेवेन्द्र शतेषुधे धनुरिदं ज्यावर्ज्यमाकल्प्यतां
शल्यानामपि कुण्ठितानि वदनान्याकल्पय त्वं प्रभो ।
भूयो नः सुमनाः शिवश्च भव (प्र) भोः श्रीचन्द्रचूडामणे
कारुण्यार्द्रकटाक्षवीक्षणकलामूर्तिं मयि त्वं कुरु ॥

'अवतत्य धनुस्त्वम्' इत्यारभ्य 'सुमना भव' इत्यन्तमेकः श्लोकः ॥ ९ ॥

अस्तु ज्यारहितं धनुर्गतशरा तूणिश्च किं चेषवः
सन्त्वस्मद्दृहगोचराश्च विगलत्खड्गोऽस्तु कोशस्तव ।
या मीढुष्टम हेतिरस्ति भवतो हस्ते धनुर्नामिका
सर्वाहिंसिकया तयातिदुरितान्नस्त्वं समस्तादव ॥

'विज्यं धनुः कपर्दिनः' इत्यारभ्य 'अयक्ष्मया परिब्भुज' इत्यन्तमेकः श्लोकः ॥ १० ॥

अस्तु ज्यारहिताय ते नतिरियं बाणाय शंभो पुन-
र्बाहुभ्यां च नमस्तवास्तु धनुषे तुभ्यं परस्मै नमः ।
मुक्तोऽस्मान् धनुषः शरस्तव विभो संवर्जयत्वादरा-
न्नः किं चेषुधिरस्ति यस्तव च तं मद् दूरतः स्थापय ॥

'नमस्ते अस्त्वायुधाय' इत्यारभ्य 'अस्मन्निधेहि तम्' इत्यन्तमेकः श्लोकः ॥ ११ ॥

इति प्रथमोऽनुवाकः

श्रीचामीकरबाहवे नम इदं सेनाधिपायानतिः
काष्ठानां पतये नमोऽस्तु भवते वृक्षस्वरूपाय च ।
शंभो ते हरिताभकेशशिरसे पत्ये पशूनां नमः
संहर्त्रे सकलान् सुरारिनिचयान् तस्मै महातेजसे ॥

'नमो हिरण्यबाहवे' इत्यारभ्य 'त्विषीमते' इत्यन्तमेकः श्लोकः ॥ १२ ॥

मार्गाणां पतये नमः कपिलभादीप्ताय विव्याधिने-
ऽप्यन्नानां पतये नमः प्रतिदिनं यूने शुभाङ्गाय च ।
पुष्टानां पतये नमो भवभिदे तुभ्यं जगत्स्वामिने
रुद्रायात्तशराय कायपतये सूताय सुज्योतिषे ॥

15

'पथीनां पतये नमो नमः' इत्यारभ्य 'अहन्त्याय' इत्यन्तमेकः श्लोकः ॥ १३ ॥

कान्तारप्रभवे च लोहितसमायाति[ध्व]नेर्वेश्मनां
निर्मात्रे द्रुमपाय मन्त्रपतये तुभ्यं वणिग्रूपिणे ।
कक्षाणां पतये नमो नम इदं विश्वेश्वरायानति-
भक्तान् पालयते नमोऽस्तु शशिने मेघस्वरूपाय च ॥

'वनानां पतये' इत्यारभ्य 'उच्चैर्घोषाय' इत्यन्तमेकः श्लोकः ॥ १४ ॥

हस्तास्फालनपूर्वकं प्रतिभटं युद्धे य आक्रन्दते
तद्रूपाय नमः पदातिपतये रुद्राय तुभ्यं नमः ।
सर्वाङ्गावृतकञ्चुकाय च नमो वेगेन संधावते
जन्तूनां पतये नमो नम इदं रुद्राय तुभ्यं नमः ॥

'आक्रन्दयते' इत्यारभ्य 'सत्त्वनां पतये' इत्यन्तमेकः श्लोकः ॥ १५ ॥

इति द्वितीयोऽनुवाकः

भक्तानां सकलापराधसहमानायास्तु तुभ्यं नमः
कामं दण्डनशीलनाय च नमो दुर्मार्गसंचारिणाम् ।
सेनायाः पतये नमोऽस्त्वभिमुखं संतानयन्त्या नमो
रुद्रायोन्नतिशालिने नम इदं खड्गप्रहर्त्रे नमः ॥

'नमः सहमानाय' इत्यारभ्य 'ककुभाय निषङ्गिणे' इत्यन्तमेकः श्लोकः ॥ १६ ॥

स्तेनानां पतये निषङ्गिण इदं तूणीरधर्त्रे नम-
श्चोराणां पतये प्रतारणपते तुभ्यं वरीवञ्चते ।

ये मुष्णन्ति वनेषु भूषणलसद्वस्त्राणि तेषां पुनः
स्तायूनां पतये नमोऽस्तु नितरां संचारशीलाय ते ॥

'स्तेनानां पतये' इत्यारभ्य 'निचेरवे परिचराय' इत्यन्तमेकः श्लोकः ॥ १७ ॥

संचारेषु विचक्षणाय पतये कान्तारसंचारिणां
वज्रेणातिशितेन सर्वजगतां संरक्षकायानतिः ।
तुभ्यं बाधितुमिच्छते नम इदं ते मुष्णतां स्वामिने
खड्गं धारयते निशासु चरते प्रच्छेदकर्त्रे नमः ॥

'परिचरायारण्यानाम्' इत्यारभ्य 'प्रकृन्तानां पतये नमः' इत्यन्तमेकः श्लोकः ॥ १८ ॥

उष्णीषं धरते गिरीन्द्रचरते ते भिक्षुकानां नमो
नाथायेषुमते धनुष्मत इदं रुद्राय तुभ्यं नमः ।
कुर्वाणाय धनूंषि विस्तृततरज्याकानि ते स्वानति-
र्विस्तीर्णे च शरान् धनुष्यविरतं सम्यग्दधानाय च ॥

'उष्णीषिणे' इत्यारभ्य 'प्रतिदधानेभ्यः' इत्यन्तमेकः श्लोकः ॥ १९ ॥

संधायाशु शरान् धनुष्यतितरामाकर्षते ते नमो
लक्ष्यस्याभिमुखं शरान् सृजयते रुद्राय तुभ्यं नमः ।
शत्रोर्विक्षिपते समीपममलान् बाणानमोघान् नमः
शत्रोस्ताडयते शरीरमनिशं सिंहासनस्थाय च ॥

'आयच्छद्भ्यः' इत्यारभ्य 'आसीनेभ्यः' इत्यन्तमेकः श्लोकः ॥ २० ॥

शय्यायां शयनं नमः कलयते निद्राकृते चानति-
र्नित्यं जागरणं नमः कलयते संतिष्ठते ते नमः ।

कुर्वाणाय च धावनं परिषदां रूपाय तुभ्यं नमः
संघानां पतये नमोऽश्ववपुषे ते वाजिनां स्वामिने ॥

'शयानेभ्यः' इत्यारभ्य 'अश्वपतिभ्यः' इत्यन्तमेकः श्लोकः ॥ २१ ॥

इति तृतीयोऽनुवाकः

या सेना सकलं जगद् बहुविधं संपीडयन्ती नम-
स्तस्यै या च निहन्ति घोरदनुजान् तस्यै ममास्त्वानतिः ।
सर्वोत्कृष्टगणाय ते गमयते हिंसाविशेषान् नमो
गृत्सायाथ नमो नमोऽधिपतये मेधाविनां ते नमः ॥

'नम आव्याधिनीभ्यः' इत्यारभ्य 'गृत्सपतिभ्यः' इत्यन्तमेकः श्लोकः ॥२२॥

संघायास्तु नमोऽथ संघपतये गर्जद्गणायानति-
र्दीप्यद्देवगणाधिपाय च नमो नानास्वरूपाय च ।
सिंहव्याघ्रगजाश्वमेषमहिषव्यालादिरूपाय च
स्वाकारैर्महते नमो नम इदं क्षुद्राय तुभ्यं नमः ॥

'व्रातेभ्यः' इत्यादि 'क्षुल्लकेभ्यः' इत्यन्तमेकः श्लोकः ॥ २३ ॥

अस्तु स्यन्दनशालिने नतिरियं पद्भ्यां च संचारिणे
तुभ्यं मञ्जुरथात्मने नतिरियं पत्ये रथानां नमः ।
सेनाभूय सुखेलते नतिरियं सेनां प्रणेत्रे नमः
स्थारस्यन्दनशिक्षकाय च नमः सूताय संतक्षते ॥

'सेनाभ्यः[? रथिभ्यः]' इत्यादि 'तक्षभ्यः' इत्यन्तमेकः श्लोकः ॥ २४ ॥

सर्वस्यन्दनशिक्षकाय च नमस्तुभ्यं कुलालात्मने
शाणोल्लेखविचक्षणाय विहगश्रेष्ठार्भकायानतिः ।

मत्स्यानां गणघातिने च धनुषश्चेषोश्च कर्त्रे मृगान्
संहर्त्रे नयते शुनाश्ववपुषे श्वादीश्वरायानतिः ॥
'रथकारेभ्यः' इत्यादि 'श्वपतिभ्यः' इत्यन्तमेकः श्लोकः ॥ २५ ॥

इति चतुर्थोऽनुवाकः

सर्वत्रानिशमुद्भवाय च नमः संसारहन्त्रे नमः
सर्वं नाशयते युगान्तसमये पात्रे पशूनां नमः ।
कालालंकृतकंधराय धवलग्रीवाय भास्वज्जटा-
भारायाचिरवीक्षिताय च नमो देवेन्द्ररूपाय ते ॥
'नमो भवाय च' इत्यारभ्य 'नमः सहस्राक्षाय च' इत्यन्तमेकः श्लोकः ॥२६॥

तुभ्यं बाणशताय ते शिखरिणामीशाय रश्म्यात्मने
वृष्ट्यासेक्तृतमाय चास्त्विषुमते ह्रस्वाय ह्रस्वाङ्गिने ।
आकाशान्महते नमोऽतिवयसा वृद्धाय चाकारतः
पूर्णायास्तु नमो नमः प्रवयसा चाद्यन्तपूर्णाय ते ॥
'शतधन्वने च' इत्यारभ्य 'संवृध्वने च' इत्यन्तमेकः श्लोकः ॥ २७ ॥

देवानां पुरतो भवाय च नमः श्रेष्ठाय शीघ्राय ते
दक्षायास्तु गतौ भवाय च नमस्ते वेगवत्यम्भसि ।
वेगं बिभ्रति वारिणि स्थितिमते वीचीस्वरूपाय ते
पूरस्थाय गतस्वनोदवपुषे मूलद्वयस्थायिने ॥
'नमो अग्रियाय च' इत्यारभ्य 'द्वीप्याय च' इत्यन्तमेकः श्लोकः ॥२८॥

इति पञ्चमोऽनुवाकः

वृद्धायातिकनीयसे च जगतः पूर्वं स्थितायाखिल-
प्राणिभ्योऽप्युपरिस्थिताय च नमः कालान्तरस्थाय च ।

अत्यन्तं शिशवे नमोऽस्तु जघनस्थाने भवायानिशं
मूलस्थाय नमो नमो निवसते गन्धर्वपुर्यां नमः ॥

'नमो ज्येष्ठाय च' इत्यारभ्य 'सोभ्याय च' इत्यन्तमेकः श्लोकः ॥२९॥

रक्षाबन्धभवाय कालनगरस्थायास्तु रक्षात्मने
सम्यक्सस्यसमृद्धिभूमिवसते खल्याय तुभ्यं नमः ।
छन्दोमन्त्रमयाय नैगमशिरःस्थायास्तु वृक्षात्मने
(सम्यक्सस्यसमृद्धिभूमिवसते खल्याय तुभ्यं नमः) (?) ॥

'प्रतिसर्याय च' इत्यारभ्य 'प्रतिश्रवाय च' इत्यन्तमेकः श्लोकः ॥ ३० ॥

शीघ्रव्यापिपदातये लघुरथश्रेष्ठाय शूराय ते
शत्रूणामवभिन्दते नम इदं संबिभ्रते कञ्चुकम् ।
सूतप्रावरणस्थलाय च शिरस्त्राणाय तुभ्यं नम-
श्चागुल्फासितकञ्चुकाय च नमो विख्यातसेनाय ते ॥

'नम आशुषेणाय च' इत्यारभ्य 'श्रुतसेनाय च' इत्यन्तमेकः श्लोकः ॥ ३१ ॥

इति षष्ठोऽनुवाकः

गर्जद्दुन्दुभिवाद्यजाय च नमस्तत्ताडनोत्थस्फुरद्-
ध्वन्याकारशरीरिणे रिपुतिरस्कारेषु दक्षाय च ।
तुभ्यं सर्वविचारकाय च नमः संदेशहर्त्रे नमः
सर्वेषामुपकारिणे नम इदं तीक्ष्णेषवे ते नमः ॥

'नमो दुन्दुभ्याय च' इत्यारभ्य 'तीक्ष्णेषवे च' इत्यन्तमेकः श्लोकः ॥३२॥

कोदण्डाय शुभायुधाय च नमः क्षुद्राध्वजायाखिल-
प्रख्याताध्वनि संभवाय च नमो लिङ्गात्मने ते नमः ।

नीपस्थाय सुवारिकर्दमभुवे ते कृत्रिमोदाशये
संभूताय नदीभवाय च नमस्ते पल्वलस्थाय च ॥
'आयुधिने च' इत्यारभ्य 'वैशन्ताय च' इत्यन्तमेकः श्लोकः ॥ ३३ ॥

कूपान्तर्जननाय गर्तजनुषे वर्षोद्भवायानतिः
सिन्धुस्थाय नमो बलाहकभुवे सौदामिनीजाय च ।
भास्वच्छारदमेघजाय च नमः स्फीतातपस्थाय ते
वात्यायास्तु निदाघजाय गृहिणे ते वास्तुपायानतिः ॥
'नमः कूप्याय च' इत्यारभ्य 'वास्तुपाय च' इत्यन्तमेकः श्लोकः ॥३४॥

इति सप्तमोऽनुवाकः

शर्वाणीसहिताय शं विदधते रक्ताय ताम्राय ते
सौख्यं प्रापयते नमो भयकृतः शिक्षां विधात्रे नमः ।
भीतिं कल्पयते नमोऽस्त्वभिमुखं हन्त्रे नमो दूरतो
हन्त्रे च प्रणतिः सुरावनिसुरद्विड्बृन्दहन्त्रे नमः ॥
'नमः सोमाय च' इत्यारभ्य 'नमो हन्त्रे च' इत्यन्तमेकः श्लोकः ॥ ३५ ॥

ब्रह्मद्विट्प्रविनाशकाय च नमो वृक्षस्वरूपाय ते
संसाराम्बुधितारकाय च नमः सौख्यप्रदात्रे नमः ।
सद्यः स्वर्गसुखप्रदाय च नमः सौख्यप्रदायानतिः
स्वर्गीयातिसुखप्रदाय च शिवं कर्त्रेऽतिरुन्धाय च ॥
'हनीयसे च' इत्यारभ्य 'शिवतराय च' इत्यन्तमेकः श्लोकः ॥ ३६ ॥

गङ्गादिप्रभवाय ते नम इदं तत्तीरजायानतिः
पारस्थाय नमोऽस्त्वपारजनुषे रुद्राय तुभ्यं नमः ।

संसाराख्यमहासमुद्रतरणे हेतुस्वरूपाय ते
संसाराम्बुनिधौ निमग्नसुजनस्योत्तारणे हेतवे ॥

'नमस्तीर्थ्याय च' इत्यारभ्य 'उत्तरणाय च' इत्यन्तमेकः श्लोकः ॥ ३७ ॥

तीरं प्राप्य भवाम्बुधेः पुनरपि व्यावर्तनं मोहतो
यत् तत्स्थाय च नाकलोकजनुषे तुभ्यं प्रणामोऽस्तु मे ।
घासेषु प्रभवाय ते नम इदं फेनेषु संस्थायिने
सर्वासु प्रभवाय मञ्जुसिकतास्वस्तु प्रवाह्याय च ॥

'नम आतार्याय च' इत्यारभ्य 'प्रवाह्याय च' इत्यन्तमेकः श्लोकः ॥ ३८ ॥

इति अष्टमोऽनुवाकः

रुद्रायोषरभूमिजाय च नमः सन्मार्गजायानति-
स्तुभ्यं क्षुद्रशिलातलाय च नमः पान्थप्रवासाय ते ।
चञ्चच्चन्द्रकपर्दिने च पुरतः सर्वत्र संतिष्ठते
गोष्ठस्थाय नमोऽस्तु ते गृहभुवे खट्वादिजायानतिः ॥

'नम इरण्याय च' इत्यारभ्य 'नमस्तल्प्याय च' इत्यन्तमेकः श्लोकः ॥ ३९ ॥

प्रासादेषु भवाय ते नम इदं काट्याय चाद्रेर्गुहा-
मध्यस्थाय हृदि स्थिताय च नमो नीहारजायानतिः ।
पांसुस्थाय नमो रजस्यपि पुनर्जाताय शुष्क्याय ते
दिक्संस्थाय च कर्कशस्थलभुवे घासस्थलस्थाय च ॥

'गेह्याय च' इत्यारभ्य 'उलप्याय च' इत्यन्तमेकः श्लोकः ॥ ४० ॥

क्षोणीजाय नमोऽस्तु ते बिलभुवे पर्णे भवायानतिः
शुष्कीभूततरुष्वपि स्थितिमते रुद्राय तुभ्यं नमः ।

उद्यम्यायुधमुद्यताय च नमो वध्यान् नमो हिंसते
स्वल्पं खेदयते नमोऽस्तु जगतां खेदप्रदात्रे नमः ॥

'नम ऊर्व्याय च' इत्यारभ्य 'प्रखिदते च' इत्यन्तमेकः श्लोकः ॥ ४१ ॥

ये देवा रवितारकेन्दुसहितं लोकान्तरं कुर्वते
देवानां हृदि रक्षणाय जगतां तिष्ठन्ति ये संस्थिताः ।
तेभ्यो वोऽस्तु नमः पुनर्भयकरव्याध्यादिहिंसां च वः
कुर्वद्भ्यो जगतां नमो जगति ये तिष्ठन्ति तेभ्यो नमः ॥

'नमो वः किरिकेभ्यः' इत्यारभ्य 'नमो विक्षीणकेभ्यः' इत्यन्तमेकः श्लोकः ॥ ४२ ॥

एते दुष्कृतिनस्त्विमे सुकृतिनश्चैवं विचिन्वन्ति ये
तेभ्यो वोऽस्तु नमः पुनः प्रतिदिनं हिंसन्ति ये प्राणिनः ।
तेभ्यो वोऽस्तु नमः पुनश्च परितो भिन्दन्ति लोकांश्च ये
तेभ्यो वोऽस्तु नमो नमो बहुमतेभ्यश्चामरेभ्यो नमः ॥

'नमो विचिन्वत्केभ्यः' इत्यारभ्य 'नम आमीवत्केभ्यः' इत्यन्तमेकः श्लोकः ॥ ४३ ॥

इति नवमोऽनुवाकः

लोकानां कुगतिप्रकल्पक निराधारार्धनारीश्वर
त्वं मे पुत्रकलत्रमित्रजनकादीनां पशूनामपि ।
एषां भीषयथा न किंचिदपि मा चार्षीरिमांस्त्वं विभो
मा हिंसीत् त्वदनुग्रहेण निखिलव्याध्यादिकं चापि तान् ॥

'द्रापे अन्धसस्पते' इत्यारभ्य 'किं च नाममत्' इत्यन्तमेकः श्लोकः ॥ ४४ ॥

या ते रुद्र शिवा तनूः सुखकरी विश्वेष्वहःस्वादराद्
रुद्रस्येव सुखप्रदा शिवतमा शान्ता तया नो मृड
वर्तन्ते समुपाश्रिताः पुररिपुं यं वीरभद्रादय-
स्तस्मै वृद्धिमते धियं वयमिमां प्रोच्चारयामोऽनिशम् ॥

'या ते रुद्र शिवा तनूः' इत्यारभ्य 'प्र भरामहे मतिम्' इत्यन्तमेकः श्लोकः ॥ ४५ ॥

अस्माकं द्विपदां चतुष्पदवतामेषां यथा स्यात् सुखं
ग्रामेऽस्मिञ्जनपुष्टितापि च यथा स्यादस्तु सर्वं तथा ।
अस्मान् पालय रुद्र किंच भगवन्नामुष्मिकं मे सुखं
कुर्वष्टाङ्गपुरःसरेण नमसा धीरं भवन्तं भजे ॥

'यथा नः शर्म सत्' इत्यारभ्य 'नमसा विधेम ते' इत्यन्तमेकः श्लोकः ॥ ४६ ॥

रोगाणां शमनं प्रजापतिरसौ यस्य प्रसादादगाद्
भीतानां शमनं च यस्य कृपया प्रागात् प्रभूणां नमः ।
आज्ञायां तव तादृशस्य भगवन् संविद्यमाना वयं
स्रष्टावुद्भवतामनुग्रहवशान्नीरोगतां प्राप्नुमः ॥

'यच्छं च' इत्यारभ्य 'प्रणीतौ' इत्यन्तमेकः श्लोकः ॥ ४७ ॥

रुद्रास्मत्प्रपितामहादिकमुत श्रेष्ठं सुपुत्रं च नो
मा हिंसीरुत नः शिशुं च वृषभं संतानदं मा वधीः ।
मा हिंसीः शिव मातरं च पितरं किं च प्रियां नस्तनुं
मा हिंसीरुत नः कदापि च विभो मा रीरिषो मा वधीः ॥

'मा नो महान्तम्' इत्यारभ्य 'रुद्र रीरिषः' इत्यन्तमेकः श्लोकः ॥ ४८ ॥

पुत्रं सद्गुणशालिनं बुधवरं पौत्रं च मा रीरिषो
रुद्रायूंषि च नः पुनर्महिषगोबृन्दादिकं मा वधीः ।
अस्मान् पुत्रगवाश्वभाग्यसहितान् त्वं मन्युना संहितो
मा हिंसीर्नमसा भवन्तमनिशं होमेन चाराधये ॥

'मा नस्तोके' इत्यादि 'नमसा विधेम ते' इत्यन्तमेकः श्लोकः ॥ ४९ ॥

गोपुंसां हननं कृतस्य भवतो या क्रूरता वर्तते
सा मे दूरतरेऽस्तु किंच भवतो या सौम्यता वर्तते ।
सैवास्मन्निकटेऽस्तु पालय च नोऽधिब्रूहि देवैहिकं
शर्मास्मभ्यमदः प्रदेहि भगवन्नभ्यर्हित त्वं सदा ॥

'आरात्ते गोघ्ने' इत्यारभ्य 'शर्म यच्छ द्विबर्हाः' इत्यन्तमेकः श्लोकः ॥ ५० ॥

स्तोतारं रथवर्तिनं च तरुणं सिंहस्वरूपं तथा
भीमाकारमशेषवन्यहननव्यापारशीलं परम् ।
एवं त्वां भगवन् स्तवानि सततं त्वं स्तूयमानो मया
स्तोतारं मृडयेह मा तव चमूर्निघ्नन्तु मत्तः परम् ॥

'स्तुहि श्रुतं गर्तसदम्' इत्यारभ्य 'निवपन्तु सेनाः' इत्यन्तमेकः श्लोकः ॥ ५१ ॥

हेतिस्ते परितः प्रवर्जयतु नः पापं परेषां च ते
कर्तुर्दीप्तिमतोऽस्ति दुर्मतिरियं सा मां त्यजत्वेह च ।
किंच त्वं विगतज्यमाकलय मे चापं त्वदीयं पुनः
पुत्रादीनपि पण्डितान् मृडय भोस्त्वद्भृत्यवर्गानपि ॥

'परि णो रुद्रस्य' इत्यारभ्य 'तनयाय मृडय' इत्यन्तमेकः श्लोकः ॥ ५२ ॥

हे मीढुष्टम मङ्गलप्रद वरं कल्याणरूपो भवान्
अस्माकं सुमना भवाथ परमे वृक्षे निधायायुधम् ।
वैयाघ्रं वसनं च संपरिदधानोऽस्माकमग्रे चर
त्वं भूयोऽपि पिनाकमात्रभरणं कृत्वा समागच्छतात् ॥

'मीढुष्टम शिवतम' इत्यारभ्य 'बिभ्रदागहि' इत्यन्तमेकः श्लोकः ॥ ५३ ॥

शत्रूणां भयदार्धलोहित नमस्ते किंच या हेतय-
स्तास्तिष्ठन्तु सहस्रमन्यमभितो निघ्नन्तु मद्वेषिणः ।
या बाह्वोस्तव हेतयो बहुविधास्तिष्ठन्त्यसंख्याः शिता-
स्तासामीश मुखानि चानभिमुखान्यस्माकमाकल्पय ॥

'विकिरिद विलोहित' इत्यादि 'मुखा कृधि' इत्यन्तमेकः श्लोकः ॥ ५४ ॥

इति दशमोऽनुवाकः

ये रुद्रा भुवि संघशो बहुविधास्तिष्ठन्ति सिन्धौ पुन-
र्ये संख्यारहिताश्चरन्ति दिवि ये रुद्रान्तरिक्षेऽपि च ।
तेषां दूरतरे धनूंष्यवततज्याकानि तिष्ठन्त्विति
प्रायेण स्तवनप्रणामकरणैः संप्रार्थयामो वयम् ॥

'सहस्राणि सहस्रशः' इत्यारभ्य 'अन्तरिक्षे भवा अधि' इत्यन्तमेकः श्लोकः ॥ ५५ ॥

नीलालंकृतकंधराः सितगलाः पाताललोकाश्रिता
रुद्रास्तादृशलक्षणास्त्रिदिवमप्याश्रित्य तिष्ठन्ति ये ।
तेषां दूरतरे धनूंष्यवततज्याकानि तिष्ठन्त्विति
प्रायेण स्तवनप्रणामकरणैः संप्रार्थयामो वयम् ॥

'नीलग्रीवाः शितिकण्ठाः' इत्यादि 'दिवं रुद्रा उपश्रिताः' इत्यन्तमेकः श्लोकः ॥ ५६ ॥

ये वृक्षेषु विलोहिताः सितगलाः सस्पिञ्जराः संस्थिता
रुद्राः किंच गणाधिपा विशिखिनो भास्वज्जटाधारिणः ।
तेषां दूरतरे धनूंष्यवततज्याकानि तिष्ठन्त्विति
प्रायेण स्तवनप्रणामकरणैः संप्रार्थयामो वयम् ॥

'ये वृक्षेषु' इत्यारभ्य 'विशिखासः कपर्दिनः' इत्यन्तमेकः श्लोकः ॥५७॥

अन्नं भक्षयतो जनान् बहुविधं विध्यन्ति रुद्राश्च नः
क्षीरादीन् पिबतः समस्तपुरुषान् विध्यन्ति रुद्राश्च ये ।
तेषां दूरतरे धनूंष्यवततज्याकानि तिष्ठन्त्विति
प्रायेण स्तवनप्रणामकरणैः संप्रार्थयामो वयम् ॥

'ये अन्नेषु' इत्यारभ्य 'पिबतो जनान्' इत्यन्तमेकः श्लोकः ॥ ५८ ॥

सत्पात्रेषु दिदित्सवोऽन्नमपरे रुद्राः पथां रक्षकाः
शूरा ये सृकमुद्वहन्ति च परे खड्गायुधं चेतरे ।
तेषां दूरतरे धनूंष्यवततज्याकानि तिष्ठन्त्विति
प्रायेण स्तवनप्रणामकरणैः संप्रार्थयामो वयम् ॥

'ये पथां पथिरक्षयः' इत्यारभ्य 'सृकावन्तो निषङ्गिणः' इत्यन्तमेकः श्लोकः ॥ ५९ ॥

ये पूर्वोक्तगुणान्विता दशदिशि व्याप्य स्थिताः संघशो
रुद्राः कोटिसहस्रशो भुवि च ये तिष्ठन्त्यसंख्याश्च ये ।
तेषां दूरतरे धनूंष्यवततज्याकानि तिष्ठन्त्विति
प्रायेण स्तवनप्रणामकरणैः संप्रार्थयामो वयम् ॥

'य एतावन्तश्च' इत्यारभ्य 'वितस्थिरे' इत्यन्तमेकः श्लोकः ॥ ६० ॥

अनुषङ्गानुसारेण रचिता इमे श्लोकाः ॥

ये पृथ्व्याममितश्चरन्ति शतशो रुद्रान्नबाणाश्चिरं
रुद्रेभ्योऽस्तु नमोऽयुताधिकसहस्रेभ्यश्च तेभ्यो नमः ।
ये रुद्राः पवनेषवो बहुविधाः क्रूरान्तरिक्षे स्थिता
रुद्रेभ्योऽस्तु नमोऽयुताधिकसहस्रेभ्यश्च तेभ्यो नमः ॥

'नमो रुद्रेभ्यो ये पृथिव्यां येषामन्नमिषवः' इत्यनुषङ्गेण 'येऽन्तरिक्षे येषां वात इषवः' इत्यन्तमेकः श्लोकः ॥ ६१ ॥

ये रुद्रा दिवि संचरन्ति विकटा वर्षेषवः संघशो
रुद्रेभ्योऽस्तु नमोऽयुताधिकसहस्रेभ्यश्च तेभ्यो नमः ।
ये रुद्राश्च चतुर्दशेषु(?) भुवनेष्वेवं चरन्तो मुदा
रुद्रेभ्योऽस्तु नमोऽयुताधिकसहस्रेभ्यश्च तेभ्यो नमः ॥

'नमो रुद्रेभ्यो ये दिवि' इत्यारभ्य 'वर्षमिषवस्तेभ्यो दश' इत्यन्तमेकः श्लोकः ॥ ६२ ॥

कुर्मः प्राङ्मुखमञ्जलिं दश पुनर्याम्यं च कुर्मोऽञ्जलिं
प्रत्यञ्चं वयमञ्जलिं दश दिशोदीचीं च कुर्मोऽञ्जलीन् ।
कुर्मोर्ध्वं(?) च दशाञ्जलीन् वयमतस्तेभ्यो नमोऽवन्तु नो
योऽस्मान् द्वेष्टि वयं च यं बहुतरं द्विष्मः पथे तं च वः ॥

'तेभ्यो दश' इत्यारभ्य 'तं वो जम्भे दधामि' इत्यन्तमेकः श्लोकः ॥ ६३ ॥

शुद्धान्तःकरणास्त्रिसंध्यमपि ये **रुद्रार्थसाराभिधं**
स्तोत्रं पापहरं पठन्ति हृदये साम्बं भजन्तोऽनिशम् ।

नीरोगा निरुपद्रवा ऋणविनिर्मुक्ताश्चरन्ते परं
चैन्द्रं भोगमिहानुभूय चरमे मोक्षं लभन्ते जनाः ॥ ६४ ॥

वेदश्रौतसमस्तशास्त्रकवितापाण्डित्यपारंगतो
भारद्वाजकुलाब्धिशीतकिरणोऽपीतस्तनीगर्भजः ।
विद्वद्वन्दितवेङ्कटेश्वरसुतश्चक्रेऽरुणाद्रिः परं
श्रीशोणेशकृतप्रसादमहितो **रुद्रार्थसारस्तवम्** ॥ ६५ ॥

---

## ३८. वामदेवनवरत्नमालिकास्तुतिः[1]

त्र्यक्षाय नृत्तविधिदक्षाय मोहहरभिक्षाटनाय मदभृद्-
दक्षादिदुष्टजनशिक्षाय शिष्टजनरक्षाय मे नतिरियम् ।
उक्षाग्रगाय विषभक्षाय भक्तिनतयक्षाधिपेडितपदे
लक्षाण्डकोटिजनपक्षाय संभवतु तक्षादिभोगिवपुषे ॥ १ ॥

अष्टाङ्गयोगपरिमृष्टान्तरङ्गजनदृष्टाय भूमिसलिला-
द्यष्टात्मने निगमघुष्टाय भक्तजनकष्टान्धकाररवये ।
दष्टाद्रिजामधुरजुष्टाधराय परिहृष्टाय मे नतिरियं
क्लिष्टानिवार्यभवनष्टावबोधजनसृष्टान्तकाय भवतु ॥ २ ॥

गङ्गाप्रवाहभवतुङ्गातिवेगयुतभङ्गाकुलायतजटं
सङ्गादिहीनशरभङ्गादियोगिकृतलिङ्गार्चनैकफलदम् ।

[1] Based on the single incomplete MS. No. 67160 (D. C. No. 1077).

शृङ्गारयोनिमदभङ्गातिचण्डशिखपिङ्गाभफालनयनं
तं गालवादिमतिभृङ्गाङ्गनानिकरसंगानमद्य कलये ॥ ३ ॥

लीलाविभूतिभवकालादिनिघ्ननिजमूलानभिज्ञतनुभृ-
ज्जालाण्डकोटिपरिपालाब्जजातहरिफालाक्षसंघविनुतः ।
हालास्यपूर्वनिजलीलास्पदायतनशालाविहार्यवतु मां
कालान्तको झटिति नीलाम्बुदालिनिभहालाहलाङ्कितगलः ॥४॥

वेदागमाद्युदितवेदान्तमार्गगतनादान्तरूपमनन-
श्रीदायिचिद्विमलपादास्तजीवपरभेदात्मभक्तनिकरे ।
भूदारपुत्रभवखेदापनोदकरमोदाकरात्मचरिते
मे दास्यमस्तु शठवादान् विहाय गिरिजोदारविभ्रमभृति ॥५॥

तारासमूहसितहारावलीकलितनारायणीस्तनयुग-
स्फाराङ्गरागकणचोरायमानहृदयारामवल्युरगराट् ।
क्रूरान्तरङ्गविबुधारातिगर्वपरिहारात्मशूलपरशु-
र्मारारिरस्तु मम वाराणसीस्थभवभारापहृद्धनमुदे ॥ ६ ॥

सोमाय मौलिधृतसोमाय साधुजनकामाभिवर्षिकरुणा-
भूमाब्धये विविधसामाभिगानरसरोमाञ्चितात्मवपुषे ।
भीमार्चिताय युधि भीमाय पाणिधृतहेमाद्रिधुर्यधनुषे
प्रेमास्पदात्ममयधामाङ्घ्रये[1] [भवतु कामारये नतिरियम्] ॥

---

[1] Further portion is lost.

# ३८. विरक्तिरत्नावलिः[1]

प्रणम्य गुरुचिद्घनं नततमस्ततिध्वंसनं
सुखाम्बुरसवृष्टिदं सुकृतिनां हृदब्जे सदा ।
करोमि चितिवृद्धये जनिविमुक्तये ज्ञानिनां
त्रयीहृदयसागरोद्भवविरक्तिरत्नावलिम् ॥ १ ॥

अपारभवसागरं चतुरशीतिलक्षोद्भव-
स्थलोर्मिचलितं सतीसुतसुतादिनक्राचितम् ।
महेश्वरपदाम्बुजप्रणयकर्णधारेरितं
न तर्तुमलमन्यतो दृढविरक्तिपोतं विना ॥ २ ॥

न रज्यति तु धावकान् मलिनमीषदप्यम्बरं
तथा सकलवासनामलिनमानसं संविदा ।
न तिष्ठति यथा रजः परमसूक्ष्मसूच्यग्रके
सरागहृदये नृणां शिवसुखाब्धिबिन्दोः कणः ॥ ३ ॥

विनाशयति शम्बरं निजकणांशसंस्पर्शतो
विपक्वकलशं सकृच्छ्रवणतोऽपि बोधस्तथा ।
सकामपुरुषं परं विगतकामचित्ते सदा
तथा नटति चेतना सुरसरोवरे हंसिका ॥ ४ ॥

विरक्तहृदयं तथा विशति संविदम्भो यथा
सुनिम्नतरभूतलं गलितवासना धीर्नृणाम् ।
विपक्षविहगो यथा वसति वृक्षनीडे निजे
तथा शिवसुरद्रुमे परमसौख्यसाम्राज्यदे ॥ ५ ॥

[1] Edited from the MS. No. PM 644 (D. C. No. 1147 of vol. IX).

महाविबुधसङ्गिनाममृतलालसानां सदा-
शिवाङ्घ्रिकमलार्चने नियतमानसानां सदा ।
यथा विमलचन्द्रिका हिमकरस्य राकातिथौ
तथा सुकृतशालिनां किल विरक्तिरुत्पद्यते ॥ ६ ॥

तृणीकृतपितामहत्रिदशनाथसंपच्चया
सदा स्फुरति मानसे सकलसंपदा पूरिते ।
पुनश्च विषये स्पृहा भवति नैव पाते यथा
विरक्तिरिति वर्ण्यते मुनिवरैश्च सा सौख्यदा ॥ ७ ॥

जडाजडमये जगत्यसहनीयदुःखास्पदे
यथोपलमरुस्थले न लभते पयःशीकरम् ।
किरातहृदये दयां मधुरसं किराते जन-
स्तथा सुखकणं वृथाभ्रमणमात्रमेव ध्रुवम् ॥ ८ ॥

अनङ्गपरदंपतीमथनजातशुक्रार्तवे
युते भवत एकधा विशति तत्र गर्भाशये ।
तदैव नरदेहभाक् सुकृतदुःखभोगाय वै
स्वकर्मवशगो रजोद्भवविवृद्धपेशीगतः ॥ ९ ॥

तदाशयगतं क्रमात् कललभूतरेतोरजो
जरायुपरिवेष्टितं मलजलालयान्त्रान्तरम् ।
न मातृजठरानलः पचति शालिबीजादिवत्
ततोऽङ्गमभिजायते विहितभोज्यशीलैः स्त्रियाः ॥ १० ॥

शिरोनयननासिकाश्रवणबाहुवक्षःस्थलं
ह्यधोमुखहृदम्बुजं भवति गर्भपिण्डस्य च ।

स्वमातृरसधातुगप्रकृतिवर्णतेजोबला-
न्यधोमुखविलासवद्विमलदर्पणे पश्यतः ॥ ११ ॥

स्वपापफलभोगभाग् बधिरमूकपङ्ग्वादिकां
स तु प्रलभते मरुद्विकृतवक्त्रनेत्रादिकाम् ।
स्वपाकपरिपाकिकाविमलमृत्तिकास्फोटक-
प्रदीर्णसुषिरान्वितां घटतनुं तथा पूरुषः ॥ १२ ॥

स्वमातृजठरस्थितः कफगलेपरोधाच्छिशु-
र्न रोदिति सुखं तथा न लभतेऽग्नितापान्मलम् ।
विमुञ्चति न कुम्भकाद्वहति वेगजालं च नो
भजन्नरकयातनां कृमिरिवात्र मध्यस्थितः ॥ १३ ॥

वसाकफपरिप्लुतो जननमार्गतोऽधोमुखः
प्रसूतिसमये शिशुः पतति वायुना दैवतः ।
तदा कुशलकामिनी निजकरेण पादौ शिशोः
प्रगृह्य कुरुते ततः कफविशोधनं धून्वती ॥ १४ ॥

कटूष्णरससेवनाद् वसनकम्बलाच्छादनात्
पुरीषजललोलनानुचितगन्धसंसेवनात् ।
क्षुधादिपरिपीडनादवशमानसादीन्द्रिय-
स्ततः शिशुदशां कथं परमपूरुषः काङ्क्षति ॥ १५ ॥

ममेदमिति वासनागृहशरीरतातप्रसू-
जनद्रविणभूषणाम्बरधरादिपश्वादिकम् ।
न चास्ति कुलगोत्रसूत्रनरजातिवर्णाश्रमाः
शिशोः क इह वेत्ति नाहमिति वृत्तिशून्यो यथा ॥ १६ ॥

पयोधरपयः शिशुः पिबति रौति वक्षोरुहे
निजाननगते ततः करपदं धुनात्यञ्जसा ।
अधः पतति मञ्चकाद् वमति तं कफं खादति
प्रमूढहृदयः सुखं विषयजं न विन्दत्यहो ॥ १७ ॥

परिभ्रमति वक्षसा पशुवदर्भको मन्दिरे
क्वचित् खलति रोदिति क्व नु गतेति माता भृशम् ।
कृमिं धरति पाणिना चलति जानुना चासकृ-
ज्जलं पिबति ताड्यते गदभयेन मात्रा तदा ॥ १८ ॥

द्विजोद्भवगदात् तदा श्रवणवेधतोऽभ्यङ्गतो
भृशोष्णजलसेचनादुरगपूतनापीडनात् ।
अतित्वरितगर्भभृत्कुजननीस्तनास्पर्शनाद्
व्यथा भवति तां पुनः स्मरति कः पुमान् हा शिशोः ॥ १९ ॥

प्रियैः सततखेलने प्रहरति स्वमाता गृहे
बहिः प्रियजनैः सदा बलपरीक्षया मर्द्यते ।
गुरुः पठनमन्दिरेऽक्षरविधौ परं शिक्षते
प्रपञ्चहृदयं वटुं पितृजनाश्च कौमारके ॥ २० ॥

अहो जगति यौवनं नयति देहिनं सर्वदा
सकर्णवचनेक्षणं बधिरमूकजन्मान्धताम् ।
श्रुतिश्रवणशंकरस्मरणमूर्तिसंदर्शने
भवार्णवसुतारणप्लवपदाब्जभृद्देशिके ॥ २१ ॥

प्रभुः परमयौवनं विषययाचकेभ्यो यतो
हृषीकधनसंघमर्पयति कर्णभूपो यथा ।

विवेकरिपुमञ्जसा दहति कोपशस्त्राग्निना
सदाघकरमादराद्विटपतेश्च गृह्णात्यहो ॥ २२ ॥

अमूच्छतमखः स्वयं समदयौवनं योषितः
शरीरवरवेदिकाकलितयोनिकुण्डे भृशम् ।
जुहोति नरशुक्लकं वदननन्दने क्रीडति
प्रियाधरसुधां सदा पिबति कामयानोऽनिशम् ॥ २३ ॥

न यौवनवने चर प्रबलमारभिल्लाश्रये
स कामहतकः स्त्रियाः सुनिशितैः कटाक्षेषुभिः ।
प्रहृत्य करलाघवात् त्वरितमत्रणं प्रक्षिपेत्
कुचाद्रियुगलान्तरे त्वमपि तृष्णया मुह्यसि ॥ २४ ॥

न यौवनसुरां पिब द्रविणभीतिलज्जापहां
स्वजातिकुलशीलविस्मरणकारिणीं मोहिनीम् ।
परस्वयुवतीसतीगतिविवेकहानिप्रदां
कुमार्गगतिदायिनीं निगममार्गसंरोधिनीम् ॥ २५ ॥

परस्परमतिप्रियं परमयौवने यद्द्वयो-
र्विरूपमपि मोहतः किल शरीरमासीत् पुरा ।
तदप्रियमहो भवत्यथ शरीरिणोः पश्यतोः
सुरूपमपि वार्धके विमलचेलभूषान्वितम् ॥ २६ ॥

जराशिथिलदेहिनो भुवि सुखं कुतो विद्यते
प्रमूढहृदयेन्द्रियो भवति तत्र सर्वा स्पृहा ।
पदं स्खलति वै गतौ कटितटं न तत् पूर्वव-
च्छिरश्श्लथति वेपते करयुगं मनो भ्राम्यति ॥ २७ ॥

स्वपुत्ररमणीसुता विषमवाक्यशूलेन तं
कुतस्तव धनं वद क नु च कर्म संपादितम् ।
इति प्रियजनाः सदा परितुदन्ति वृद्धं तदा-
प्यहो स परिखिन्नधीः शिवशिवेति नाक्रोशति ॥ २८ ॥

प्रयान्तमपि मन्दिरात् परुषवाक्यनिर्भर्त्सितं
कुचेलमतिवार्धकं विधृतदण्डहस्तं नरम् ।
क तात परिगच्छसीत्यपहसन्ति नप्त्रादयः
पुनश्च परिवेष्टिता अपहरन्ति तस्यांशुके ॥ २९ ॥

क मे नगरकम्बलं क च गतं कलिङ्गांशुकं
सुमृन्मयघटः प्रिये मृदुलतार्णशय्या परा ।
महानिशि गृहेश्वरि स्वपिषि चोरकाले कथं
प्रजल्पति जरान्वितो न लभतेऽपि निद्रासुखम् ॥ ३० ॥

चतुर्ष्वपि दशान्तरेष्वहह भूपतिर्मानवः
सुखं न लभते सदा परवशो यतः सेन्द्रियः ।
स्वमातृपितृवर्जितो भवति तत्र बाल्येऽर्भकः
सदोपजननीजनैः स परिपोष्यते सेवकैः ॥ ३१ ॥

सदा विपदहो सुखं कथमसज्जनो मन्यते
नृपेन्द्रतनयस्य संभवति यच्च कौमारके ।
गजाश्वरथवाहनभ्रमणचालनारोहणे
महास्त्रशरचापशिक्षणविधौ गदायोधने ॥ ३२ ॥

सदा नगरपालने प्रकृतिरञ्जने ध्वंसने
द्विषां कुमतिशिक्षणे सुकृतिलोकसंरक्षणे ।

सुकीर्तिधनपोषणे निजसुहृज्जनालापने
कुतो निहितचेतसो नरमणेः सुखं यौवने ॥ ३३ ॥

नृपोऽहमिति गर्वितो विधिनिषेधवर्ज्यो भव-
त्यमार्गगमनात् सदा दुरितकण्टकाविद्धपात् ।
शशाङ्कमुखसुन्दरीवरतरक्षुपङ्क्त्यां पुन-
र्न याति हृदयांशुकं नरपतेर्विलग्नं परम् ॥ ३४ ॥

भयं द्विजकुलोद्भवे भवति सर्वदा देहिनः
श्रुतिस्मृतिविचारणे यजनयाजने पाठने ।
स्वराक्षरविलोपतो दुरवगाहवेदार्थतो
यथाविधिजपार्चनाव्रतविलोपतः कालतः ॥ ३५ ॥

वणिक्कुलजदेहिनः क्व सुखमर्थकामस्य हा
परार्थचयरक्षणे कलितकालहीनक्रये ।
महीपतिमहाभये परपणीयलाभक्षये
सदा निहितचेतसः कृषिपरिश्रमे गोक्रये ॥ ३६ ॥

त्रिवर्णजनसेवकः सविनयः पदादुद्भवो
विधेर्भवति सर्वदा परवशः स भुङ्क्ते कदा ।
अनेकपरिचर्यया शिथिलगात्रसर्वेन्द्रियः
कदा स्वपिति मानवः कथमसौ विरक्तिं भजेत् ॥ ३७ ॥

कुतः सुखमथ स्त्रिया भवति तत्र कौमारके
स्वजातिकुलशीलरूपमतितुल्यभर्ता मया ।
कदा क्व किल लभ्यते सकलभूषणालंकृता
भवामि कथमेवमादिशतचिन्तयावेष्टिते ॥ ३८ ॥

सदा मृदुलभाषणे श्वशुरसेवने यौवने
स्वभर्तृपरितोषणे गृहपदार्थसंरक्षणे ।
सुपाककरणे परं सुपरिवेषणे प्रेरणे
सदार्पितदृशः सुखं पतिगृहे रमण्याः कुतः ॥ ३९ ॥

मुहुर्भयमहो स्त्रियाः पतिविरोधगर्भाच्च्युतेः
प्रजासु बहुलत्वतो जननतः सपत्न्याः शिशोः ।
मृतेः प्रसवतो धवात्ययवियोगदारिद्र्यतः
स्नुषातनययोगतोऽप्यननुकूलजामातृतः ॥ ४० ॥

विरूपविगुणस्त्रिया रमणसंप्रसादो न वै
जनाः सततमङ्गनामभिलषन्ति रम्या यदि ।
स्वमातृभवनस्थिता परजनेन सा निन्द्यते
सुखं खलु कुतः स्त्रियाः क्व भुवि लौकिकं चा मृतेः ॥ ४१ ॥

मुरारिपदपङ्कजप्रवणहस्तिराजोऽपि किं
सुखी परमभूत् पुरा कुजनिनक्रवक्त्राहृतः ।
क्षितीशवरवाहनस्य करिणस्तु का वा कथा
निषादिदृढश्रृङ्खलाङ्कुशनियन्त्रणाद् बन्धनात् ॥ ४२ ॥

सुखं शतमखाश्रयेऽप्यहह दभ्रमप्यन्ततो
न चाभ्रमुपतेः स्वतश्चरणरोधनाद् बन्धनात् ।
पुरंदरमनोनुगां कलयतो गतिं चोत्तमां
मुनिप्रवरशापतो वसुमतीगजत्वान्वयात् ॥ ४३ ॥

पयोधिमथनोद्भवः सुरपतिप्रियोच्चैःश्रवाः
सदा सुररणाङ्गणभ्रमणघर्मलालामुखः ।

भवत्यपरसैन्धवो नरपतेः कथं प्राप्नुयात्
सुखं शकटकर्षणात् कुशलसादिपादाहतेः ॥ ४४ ॥

जितो हरिरितीह पक्षिपतिराप दर्पं ततो
हरेः किल वरार्थिनः प्रवरपत्रतामावहत् ।
सुखं न पतगेशितुश्च परपक्षिणः स्यात् कथं
किरातजनभोजनस्य तरुकोटरावासिनः ॥ ४५ ॥

त्रिमूर्तितनुरूपकस्तरुशिरोमणिः पुण्यभाक्
प्रजाविविधकामनासततपूरणायास्तधीः ।
सुखी भवति किं ततोऽपरतरुः कथं प्राप्नुयात
सुखं भवनपुत्तलीपरिकरादिहेतुः परम् ॥ ४६ ॥

सदा त्रिपथगामिनी परमपावनी साप्यहो
सुखं न लभते नृणां दुरितवर्गसंक्षालनात् ।
तनूमलपरिक्षयाच्छिवकपर्दसंरोधना-
न्नदी विपिनगामिनी किमयते सुखं जाड्यभाक् ॥ ४७ ॥

सुखं किमु सरित्पतेश्चुलुकनान्मुनेर्मन्थना-
दहीन्द्रतनुरज्जुना सततबाडवग्रासतः ।
रघुप्रवरबन्धनान्नियतमाकुलीभावतो
निजे हि भवने सदा स्वतनुजापतेर्वासनात् ॥ ४८ ॥

समुद्रजलपानतो गगनमार्गसंचारतः
प्रचण्डपवनाहतेरशनिताडनाद् वज्रिणः ।
अकालनिजकालयोरपि च भूतले वर्षणात्
कुतो जडमयस्य हा भवति धूमयोनेः सुखम् ॥ ४९ ॥

वनस्पतिपतिः स्वयं स खलु राजयक्ष्माकुलः
सुधाकरशरीरभृद् भवति राहुणा पीडितः ।
मलिम्लुचसरोरुहप्रवरकामुकद्वेषिणो
विचित्रममरत्वमेतदवलोकयेन्दोः परम् ॥ ५० ॥

महेश्वरभयाद् रविर्भ्रमति काञ्चनाद्रिं सदा
प्रजाघशुभकर्मणां भवति किं च साक्षी भृशम् ।
विहीनदशनाननश्चरुहविः समश्नात्यहो
कुतोऽस्य सुखमात्मनः परमनूरुमत्सारथेः ॥ ५१ ॥

शुभाशुभमखे हुतं वहति भूसुरैरानने
तदर्पयति हव्यवाड् यजनदेवताभ्यो हविः ।
पचत्यपि च षड् रसान् नृजठरे तथा मन्दिरे
कुतोऽस्य सुखमस्ति हा नियतदीपभावान्निशि ॥ ५२ ॥

सहस्रभगवान् हरिः कथमसौ सुखं प्राप्नुया-
न्न चैकसुभगान्वितोऽपि च नरस्त्रिलोके सुखी ।
शरीरचरुयाजिनां रणधनंजये प्रीतये
स्वभोज्यगणिकाङ्गनात्रजनियोजकश्चानिशम् ॥ ५३ ॥

सुखी भवति किं विधिर्विविधसृष्टिसंकल्पवान्
जितेन्द्रिययतीश्वरादरणचित्तवृत्तिः सदा ।
स्वपूर्वचतुराननप्रचुरमुण्डमाल्यं परं
महेशगलमण्डनं मनसि चिन्तयन् बुद्धिमान् ॥ ५४ ॥

सुखी कथमधोक्षजो रघुकुलावतंसः परं
दशाननवधोत्सुको नरहरिर्महावामनः ।

फणीन्द्रशयनः पयोनिधिनिकेतनः श्रीपति-
धराधरधरः पुमान् बहुलवेषधारी यथा ॥ ५५ ॥

महापितृवनालयो नरकरोटिमालाधरः
पिशाचगणसंवृतः करटिचर्मवासोधरः ।
चिताभसितलेपनो विषधरेन्द्रभूषो हरो
विरूपनयनः सुखी भवति किं च भिक्षाटनः ॥ ५६ ॥

विधिप्रमुखदैवतैर्मनसि काङ्क्षणीयं मुहु-
र्निदानममृतस्य यत् सकलदेवतांशात्मकम् ।
नृजन्म भुवि देहिनां परमदुर्लभं हाटकं
करोति कुमतिर्वृथा भुवि यथा ह्यपात्रे व्यधात् ॥ ५७ ॥

द्विजत्वमपि दुर्लभं वरकुलोद्भवत्वं नृणां
त्रयीविहितकर्मकृत्त्वमपि शांभवत्वं ततः ।
विशुद्धमतिसंगमो विमलबुद्धिमत्त्वं परं
त्विदं भवति यस्य वै सुकृतशालिनां सोऽग्रणीः ॥ ५८ ॥

गतं न लभते जनः क्षणलवांशमप्यायुषः
सदा विषयवासनाक्षपितकालवृत्तेर्बत ।
लभेत सिकतागतं जलमपि प्रयत्नान्न तत्
ततः कुरु तदैश्वरं सफलमात्मसंयोजनात् ॥ ५९ ॥

नर स्मर न तां वृथा विषलतामिमां सुन्दरीं
स्तनद्वयसुमञ्जरीमधुरपल्लवां मोहिनीम् ।
भवज्वरविकारदामसहनीयतृष्णावहां
स्त्रियः खलु विचिन्तनादपि विमोहयन्त्यद्भुतम् ॥ ६० ॥

असत्यनिलयं परं दुरितकृष्णवर्त्मेन्धनं
परार्तिकरणक्षमं परुषमोहगर्वालयम् ।
अचञ्चलसुधीमनःकुलगिरीन्द्रवज्रायुधं
कथं हि रमणीजनं कमलसंभवोऽजीजनत् ॥ ६१ ॥

वशीकरणमन्त्रमद्भुतमपारवीर्यं स्मरः
प्रयोगकुशलः स्वयं खलु जपन् सदा त्र्यक्षरम् ।
प्रसिद्धमबलेति तं त्रिभुवनस्थजन्तुष्वसौ
करोति सफलं ततः स्मरहरेति मन्त्रं जप ॥ ६२ ॥

गतानुगतिका जना ध्रुवमिमे जगत्यां सुधी-
र्न कोऽपि सुविचारवान् यदबलेति मत्ताः स्त्रियः ।
विचित्रमिह ता बलप्रकृतिधर्मतेजस्तपो-
धनान्यपहरन्ति याः स्मरणमात्रतो जाग्रति ॥ ६३ ॥

सुतेन सुगतिः पितुः स्मृतिगिरेरितेति ध्रुवं
तथैव तपसा गतिर्न खलु पुत्रहीनस्य किम् ।
तदर्थमबलानले बहुधनेन्धनप्रोज्ज्वले
पतङ्ग इव दीपके पतति सत्तपोबाधके ॥ ६४ ॥

वृथा बहुधनव्ययैर्व्रतजपैः प्रजोत्पादनं
करोति विबुधोऽपि किं जगति धर्मपत्न्या मुदा ।
स चेत् कुचरितो भवेद् भवति पुण्यलोकस्थितेः
पितुः पतनकारणं प्रकटमैहिके चायशः ॥ ६५ ॥

पिता भवति रेतसा स्वयमिहैव पुत्रात्मना
त्रयी वदति तत्तथा विदितमेतदत्यद्भुतम् ।

स्वकर्मपरिपाकतो भवति जन्म चेति श्रुतं
श्रुतेर्हि वचनं तदर्थमवबुध्यते नो जडः ॥ ६६ ॥

अजस्य परमात्मनो न खलु शुक्लमाहारजं
पितृत्वमिव वन्ध्यपुंस इह नैव संभावितम् ।
अलिङ्गसुखचित्तनोः परिणतिश्च नो कर्मजा
सदाद्वयसदात्मनः श्रुतिविधिश्च कोऽप्यस्ति नो ॥ ६७ ॥

धनं स्वसुखकारणं निमिषशस्तथा लेशशो
नरेण बहुविद्यया परममार्जनीयं भुवि ।
न नीतिवचनं हि तत् खलु जडं सुखस्यात्मनः
कथं भवति कारणं भुवि विचारवान् कोऽपि न ॥ ६८ ॥

धनं मदविवर्धनं पतिसतीमनोभेदनं
कुनीतिजनभूषणं नटनटीसमाकर्णनम् ।
प्रपञ्चतरुजीवनं प्रणयतैलसंशोषणं
कथं हि विदुषेष्यते कुमतिभिः प्रकोपो यथा ॥ ६९ ॥

निरन्तरसुखप्रदं निटिललोचनं निष्कलं
ममत्वपरिमोचनं मदनवैरिणं तं प्रभुम् ।
विहाय विबुधोऽपि किं विभवसिद्धये कुत्सितं
नरं नरकभागिनं सततमाश्रयत्यात्महा ॥ ७० ॥

धनार्जनपरो भव त्वमिह सर्वदा दुःखधी-
स्तवात्र सुखमीषदस्ति किमु तद्धनेन ध्रुवम् ।
स्वपुत्रसुकलत्रमित्रजनभोगयोग्यं भवेत्
तदार्जनसमुच्चयेषु सरघेव किं क्लिश्यसि ॥ ७१ ॥

त्रयीपठनमादरात् पितृतिथौ हि भोक्तुं द्विजः
करोति गदितुं क्वचित् स्मृतिविमर्शनं सूतकम् ।
मनूज्ञपति हिंसनाय परमार्थतो वेदवि-
न्न कश्चिदपि पुण्यधीर्भुवि विचारवानात्मनि ॥ ७२ ॥

इदं जगदसन्महन्न खलु कर्म देहः सती
धनं निधनमिन्द्रजालमिति सर्वमात्मीयकम् ।
परानुपदिशन्त्यहो श्रुतिशिरांसि लोके स्वयं
धनार्जनपराः सदा धनिगृहाश्रिताः पण्डिताः ॥ ७३ ॥

कुतर्कपठनोत्सुकाः कुसुमबाणशास्त्रीयकाः
प्रबन्धकथनप्रियाः प्रहसनप्रशंसाकराः ।
कलाकुशलबुद्धयः कलुषहूणभाषारता
भवन्ति भुवि भूसुरा निगमसारवित् कोऽपि न ॥ ७४ ॥

धनार्जनपरो भवान् भवति यावदेव प्रिया-
कुमारपितृसोदरीदुहितृमातृबन्धुस्नुषाः ।
भवन्ति विनयान्विताः परिसरन्ति भक्त्या परं
यदा भवति निर्धनो जगति ते हि कुप्यन्ति च ॥ ७५ ॥

न कोऽपि च सहायको भवति तत्र वर्त्मन्यहो
जनो बहुदयापरास्त्वयि हि ये श्मशानावधि ।
धनार्थमनुयान्ति केचन बुधा मुधा तज्जने
करोषि सततं प्रियं त्यज ममत्वपाशं ततः ॥ ७६ ॥

पलालमिह धान्यधीस्त्यजति लोकशास्त्रश्रुती-
स्तथा त्वमपि मोक्षधीस्त्वरितमेव तं स्वीकुरु ।

चराचरमयं रसं गुरुकटाक्षसंस्पर्शनात्
पयोऽपि जलमिश्रितं कलयतीह हंसो यथा ॥ ७७ ॥

इमामशुचिकुण्डिकां जडमयीं तनुं श्यामलां
रसार्तवसुमृन्मयीं पितृकुलालसत्कारणाम् ।
यतीन्द्रनवरन्ध्रिकां सुभगचक्रसंभूतिकां
न तां स्पृश मनोरथश्वपचदूषितां सर्वथा ॥ ७८ ॥

अहो परमदुःखदो जगति कोऽस्ति देहात् पृथक्
परोपकृतिवृत्तिविस्मृतिपरश्च दोषाकरः ।
परार्तिनयनोत्सवः परधनक्षयौत्सुक्यधी-
स्तपोजनपराङ्मुखस्तरलताकरः सन्मतेः ॥ ७९ ॥

गजाब्जवरचित्रकायकिरिगोमृगाणां यथा
त्वगस्थिनखरोमरोचनवराणि गौरीपतेः ।
समर्पणविभूषणोपकरणानि जन्तोस्तथा
तवाङ्गमशिवार्पणं भवति किं न भूभारकृत् ॥ ८० ॥

मनोनृपतिमञ्जसा जहि विवेकखड्गेन तं
महेश्वरपराङ्मुखं विषयपञ्चमन्त्र्यन्वितम् ।
शिवाङ्घ्रिकमलार्चनानियतकामयानस्थित-
स्ततो ह्यमृतसुन्दरी प्रवृणुयाद्भवन्तं सुधीः ॥ ८१ ॥

मनोदशमुखासुरं भवसमुद्रमध्योल्लस-
च्छरीरपुरवासिनं विमलबुद्धिसीतामुषम् ।
जहि त्वमभिरामधीः प्रणवचापचन्द्रेषुणा
विदेहकुलदीपिकां प्रलभसे पुनः सत्वरम् ॥ ८२ ॥

मनोन्मनि जहि द्रुतं हृदयचण्डभण्डासुरं
परात्प्रकृतिमण्डितं परमशांभवीभासिते ।
महेन्द्रधनुषा त्विषा मदनवैरिनेत्राग्निना
सुखामृततरङ्गिणी भवसि तेन सम्राज्ञिका ॥ ८३ ॥

गुरूक्तिसुधयैव हृत् समलमाप्नुयाच्छुद्धतां
तदा तव हि मोक्षधीहृदयपुण्डरीकाम्बरे ।
अखण्डममृतं शिवं शशिकलावतंसं सुखं
ततस्त्वमिह पश्यसि प्रणतलोककल्पद्रुमम् ॥ ८४ ॥

कृपाब्धिवडवानलं सुकृतशैलवज्रायुधं
विमर्शसुममञ्जरीवनहुताशनं नाश्रय ।
सुमैत्रघनमारुतं सुमतिपद्मिनीहस्तिनीं
क्रुधं वरतपोऽशनिं चितिशशाङ्कराहुं नर ॥ ८५ ॥

स्पृहा शुनकबालिकेति हि वदामि भोज्ये तु सा
स्ववान्तमनघा च नातिपरिपालितान्नं भयात् ।
न गच्छति धरान्तरं तत इतः क्षणं धावति
ब्रवीमि किमहो सुधीर्जगति नास्ति तृष्णोपमा ॥ ८६ ॥

मनोरथपिशाचिका सकलधातुसंशोषिका
कुदेशगमनोत्सुका गलितभीतिदुर्वृत्तिका ।
सदा चपलचित्तदा स्मरणमात्रतो नश्यति
ध्रुवं शिवपदाब्जभक्तिरसतृप्तिसेतोर्भुवि ॥ ८७ ॥

त्वमेव परमः शिवस्त्वयि हि जातमेतज्जगत्
त्वयि प्ररमते पुनस्त्वयि विलीयते सत्तया ।

त्वमेव सकलं जगज्जलनिधौ तरङ्गादिवत्
त्वमेव परमोक्तिवानहमपीति न त्वां विना ॥ ८८ ॥

इमां परमपावनीं हृदि **विरक्तिरत्नावलिं**
सदा वहति यो नरः स तु विवेकचूडामणिः ।
भजत्यमलबुद्धिषु प्रवरतामपि श्रीपुरे-
श्वरस्य कृपयामृतं प्रलभतामनन्तं शिवम् ॥ ८९ ॥

इति श्रीविरक्तिरत्नावलिः समाप्ता

---

## ३९. शंभुस्तोत्रम्[1]

नानायोनिसहस्रकोटिषु मुहुः संभूय संभूय तद्-
गर्भावासनिरन्तदुःखनिवहं वक्तुं न शक्यं च तत् ।
भूयो भूय इहानुभूय सुतरां कष्टानि नष्टोऽस्म्यहं
त्राहि त्वं करुणातरङ्गितदृशा शंभो दयाम्भोनिधे ॥ १ ॥

बाल्ये ताडनपीडनैर्बहुविधैः पित्रादिभिर्बोधित-
स्तत्कालोचितरोगजालजनितैर्दुःखैरलं बाधितः ।
लीलालौल्यगुणीकृतैश्च विविधैर्दुश्चेष्टितैः क्लेशितः
सोऽहं त्वां शरणं व्रजाम्यव विभो शंभो दयाम्भोनिधे ॥ २ ॥

[1] Based on the single MS. No. 72986 (D. C. No. 708). *Aparādhāṣṭaka* is the title written in the margin of the MS. The above title, as given in the two volume Classified Catalogue (I, p. 247a), is more appropriate because of the refrain.

तारुण्ये मदनेन पीडिततनुः कामातुरः कामिनी-
सक्तस्तद्वशगः स्वधर्मविमुखः सद्भिः सदा दूषितः ।
कर्माकार्षमपारनारकफलं सौख्याशया दुर्मति-
स्त्राहि त्वं करुणातरङ्गितदृशा शंभो दयाम्भोनिधे ॥ ३ ॥

वृद्धत्वे गलिताखिलेन्द्रियबलो विभ्रष्टदन्तावलिः
श्वेतीभूतशिराः सुजर्जरतनुः कम्पाश्रयोऽनाश्रयः ।
लालोच्छिष्टपुरीषमूत्रसलिलक्लिन्नोऽस्मि दीनोऽस्म्यहं
त्राहि त्वं करुणातरङ्गितदृशा शंभो दयाम्भोनिधे ॥ ४ ॥

ध्यातं ते न पदाम्बुजं सकृदपि ध्यातं धनं सर्वदा
पूजा ते न कृता कृता स्ववपुषः स्रग्गन्धलेपार्चनैः ।
नान्नाद्यैः परितर्पिता द्विजवरा जिह्वैव संतर्पिता
पापिष्ठेन मया सदाशिव विभो शंभो दयाम्भोनिधे ॥ ५ ॥

संध्यास्नानजपादि कर्म न कृतं भक्त्या कृतं दुष्कृतं
त्वन्नामेश न कीर्तितं स्वतिमुदा दुर्भाषितं भाषितम् ।
त्वन्मूर्तिर्न विलोकिता पुनरपि स्त्रीमूर्तिरालोकिता
भोगासक्तिमता मया शिव विभो शंभो दयाम्भोनिधे ॥ ६ ॥

संध्याध्यानजपादिकर्मकरणे शक्तोऽस्मि नैव प्रभो
दातुं हन्त मतिं प्रतीपकरणे दारादिबन्धास्पदे ।
नामैकं तव तारकं मम विभो ह्यन्यन्न चास्ति क्वचित्
त्राहि त्वं करुणातरङ्गितदृशा शंभो दयाम्भोनिधे ॥ ७ ॥

कुम्भीपाकधुरंधरादिषु महाबीजादिषु प्रोद्धतं
घोरं नारकदुःखमीषदपि वा सोढुं न शक्तोऽस्म्यहम् ।

तस्मात् त्वां शरणं व्रजामि सततं जानामि न त्वां विना
त्राहि त्वं करुणातरङ्गितदृशा शंभो दयाम्भोनिधे ॥ ८ ॥

माता वापि पिता सुतोऽपि न हितो भ्रात्रादयो बान्धवाः
सर्वे स्वार्थपरा भवन्ति खलु मां त्रातुं न केऽपि क्षमाः ।
दूतेभ्यो यमचोदितेभ्य इह तु त्वामन्तरा शंकर
त्राहि त्वं करुणातरङ्गितदृशा शंभो दयाम्भोनिधे ॥ ९ ॥

[शंभुस्तोत्रं संपूर्णम्]

---

## ४०. शिवगौरीस्तोत्रम्[1]

सृणिपाशपुष्पशरपुण्ड्रचापकैः
करपङ्कजैः कलितभक्तवाञ्छिताम् ।
तरुणारुणारुणतनुं त्रिलोचनां
ललितां भजे ललितचन्द्रचूलिकाम् ॥ १ ॥

ललिताविभूषितनिजाङ्गमूर्तये ललितेषुचापसृणिपाशपाणये ।
उदयारुणद्युतिमुषे दयाजुषे मदनेश्वराय महते नमो नमः ॥ २ ॥

अञ्चत्पञ्चशिखोच्चमञ्चनिकटे चक्रासनाध्यासिनीं
सौन्दर्यस्य महीं नवाब्दवयसं गौरीं कुलालापिनीम् ।

[1] Based on the single MS. No. PM 2384 (D. C. No. 1115). There is neither title nor colophon in the MS.

मालापुष्पसृणीगुणाञ्चितकरां पूगप्रमाणस्तनीं
बालां श्रीललिताम्बिकादुहितरं लीलासमुद्रां भजे ॥ ३ ॥

चिन्तामणिग्रहवराञ्चितशक्तिचक्र-
रक्षाकरं कलितकुङ्कुमरक्तवर्णम् ।
सौन्दर्यराशिवपुषं दशवर्षदेश्यं
वन्दे कुमारमदनेश्वरमिन्दुमौलिम् ॥ ४ ॥

अपराजितनामधेयमश्वं सुखमारूढवती सुवर्णवर्णा ।
विलसन्मणिवेत्रपाशहस्ता परिभूयात् परमेश्वरी सपत्नान् ॥ ५ ॥

अधिरुह्य जपारुणं तुरंगं करपद्माञ्चितवेत्रपाशशक्तिः ।
परिभूतविपक्षपक्षकोऽव्यादरुणाभः परमेश्वरीसहायः ॥ ६ ॥

रक्तां विचित्रवसनां नवचन्द्रचूडा-
मन्नप्रदाननिरतां स्तनभारनम्राम् ।
नृत्यन्तमिन्दुशकलाभरणं विलोक्य
हृष्टां भजे भगवतीं भवदुःखहन्त्रीम् ॥ ७ ॥

उदञ्चिताकुञ्चितवामपादं समञ्चिताहीन्दुकृशानुहस्तम् ।
अन्नप्रदां वीक्ष्य मुदा महेशीं नटन्तमाद्यं नटमाश्रयामः ॥ ८ ॥

अरुणारुणकोटितुल्यकान्तिं सृणिपाशाभयवाञ्छितप्रदानैः ।
अनुरक्तकरां नवेन्दुचूडामखिलेशीं भुवनेश्वरीं भजामः ॥ ९ ॥

बालेन्दुकलितोत्तंसं बालारुणसमद्युतिम् ।
पाशाङ्कुशवराभीतिकरं शंभुं समाश्रये ॥ १० ॥

कुलाचलकुतूहलं कुसुमचापसंजीवनं
कुचे कलितवल्कलं गुरुकृपारसं लोचने ।

जपासहृदयं रुचौ जपवटाभिरामं करे
जटानिबिडितं कचे जयति जीवितं शांभवम् ॥ ११ ॥

दत्तात्रेयं शिवं शान्तमिन्द्रनीलनिभं प्रभुम् ।
आत्ममायारतं देवमवधूतं दिगम्बरम् ॥ १२ ॥

भस्मोद्धूलितसर्वाङ्गं जटाजूटधरं विभुम् ।
चतुर्बाहुमुदाराङ्गं प्रफुल्लकमलेक्षणम् ॥ १३ ॥

ज्ञानयोगनिधिं विश्वगुरुं योगिजनप्रियम् ।
भक्तानुकम्पिनं सर्वसाक्षिणं सिद्धसेवितम् ॥ १४ ॥

एवं यः सततं ध्यायेद् देवदेवं सनातनम् ।
स मुक्तः सर्वपापेभ्यो निःश्रेयसमवाप्नुयात् ॥ १५ ॥

[इति श्रीशिवगौरीस्तोत्रं संपूर्णम्]

---

## ४१. शिवपूजास्तवः[1]

### ज्ञानशिवप्रणीतः

प्रातः शंकरचिन्तनस्नपनसंसेकासुसंरोधनैः
[2]संध्यासंस्कृतिमार्जनाघशमनोपस्थानसंतर्पणैः ।

[1] Based on the MSS.: (A) 75270; (B) 66509; (C) 66510 and (D) 72969 (D.C. Nos. 1124, 3125, 3126, 1125 respectively). Three of these MSS. contain the comm. which has not been included in this volume, as it is extensive and may require a separate volume. But it is very helpful in understanding the text as it deals with the doctrines of the Śaiva Siddhānta and Āgama-s.

[2] संस्मृति for संस्कृति—A. B.

द्वारस्थार्चनयागधामगतविघ्नोद्वासनाद्यैः प्रभो
य: श्रीमान् यजनं करोति भवतस्तस्यैव सिद्धिद्वयम् ॥ १ ॥

एकैवार्थत ईशशक्तिरमिता [1]यानेकरूपा शिवा
कालोपाधिवशाद् द्विजा अनुदिनं [2]ब्राह्मयादिरूपेण ताम् ।
ध्यायन्त्यत्र तु निर्मलात्मशिवयोः संधिश्च शैवी परा
संध्यातः शिव एव साधकवरैर्ध्येयः सदा निर्मलः ॥ २ ॥

प्रातः स्मरामि हृदयाब्जखमध्यसंस्थं
चन्द्रार्कमार्गविरहोदितचित्स्वरूपम् ।
ध्येयं सदा मुनिवरैरपवर्गसिद्ध्यै
विश्वात्मकं सदसदन्तमनन्तमीशम् ॥ ३ ॥

मध्यंदिने शतसहस्रनिशाकराभं
विश्वेश्वरं परमकारणमप्रमेयम् ।
शंभुं सदोदितममायवियत्स्वरूपं (?)
कोदण्डमध्यनिलयं सततं स्मरामि ॥ ४ ॥

ब्रह्माक्षरं निशिमुखेऽमृतसागरस्थं
विश्वाधिपं शिवमनुत्थितनादसंस्थम् ।
बोधामृतं करणकारणकार्यहीनं
तं ब्रह्मरन्ध्रनिलयं सततं[3] स्मरामि ॥ ५ ॥

तेजोनिधानमचलं शिवमर्धरात्रे[4]
नित्यं निरस्तविषयैः परमार्थदृग्भिः ।

[1] या नैकरूपा—A.
[2] ब्राह्मादि°—A.
[3] नियतं—A.
[4] अर्धरात्र्यां—B.

विज्ञेयमव्ययमचिन्त्यमभावनीय-
मुन्मन्यतीतविषयं सततं स्मरामि ॥ ६ ॥

क्ष्मादिग्रन्थ्यन्ततत्त्वक्रमनिहितपदाक्रान्तसंशुद्धविद्या-
तत्त्वान्तव्यापिसादाशिवविशदपदं भावयन्नात्मरूपम् ।
शैवज्ञानप्रसिद्धप्रवरविधिगताशेषसत्कृत्यकारी
जीवं हृद्येव कुर्याद् रविशशिदहनव्योमशक्त्यन्तरस्थम् ॥ ७

आयामैः श्वसनस्य भौतिकमलं देहं कलाभिः सुधी-
र्यः पञ्चाध्वविसर्पिणीभिरनिशं संशोध्य तच्छम्बरैः ।
मन्त्रालंकृतदेहभृन्निशि दिवा संध्यासु संतोषय-
न्नर्चाहोमसमाधिभिः शिवमसौ संयाति शैवं पदम् ॥ ८ ॥

य एष देवो महतो महीयानणोरणीयान् भवभीरुभिः सदा[1] ।
ज्ञेयः शिवः सर्वगतः शरीरे ध्येयश्च पूज्यः शिवलिङ्गमध्ये ॥ ९ ॥

हृत्पद्माख्यशिवालये मनसिजे तत्कर्णिकाख्ये क्रिया-
पीठे ज्ञानमयं विशुद्धमनसा संस्थाप्य नादात्मना[2] ।
लिङ्गं तच्च सुधामयेन पयसा संस्नाप्य सम्यक् पुन-
र्वैराग्येण च चन्दनेन वसुभिः पुष्पैरहिंसादिभिः ॥ १० ॥

प्राणायामभवेन धूपविधिना चिद्दीपदानेन यः
प्रत्याहारमयेन सोमहविषा सौषुम्नजापेन च ।
तच्चित्तो बहुधारणाभिरमलध्यानोद्भवैर्भूषणै-
स्तत्साम्याणुनिवेदनेन यजते धन्यः स एवामलः ॥ ११ ॥

[1] सः—A.

[2] नादात्मकम् ?

[1]चन्द्रस्राविसुधामयेन हविषा नाभिस्थकुण्डेऽनलं
संतर्प्येशमयं शिवास्पदगतव्योम्नि[2] स्थिते सर्वगे।
कन्दोद्भूतशिवाणुनादशिखया वृत्त्यात्मसंवेदनं
शैवे ज्योतिषि यः करोति पुरुषो मुक्तः स एवाक्षयः ॥ १२ ॥

यथावदात्माश्रयवस्तुमन्त्रस्वायत्तलिङ्गादिषु शोधितेषु ।
सिद्धान्तमार्गस्थितसाधकानां त्वत्पूजनं नात्र विलोमतोऽस्तु ॥ १३ ॥

धारिकाभिवशक्तिबीजमनन्तपङ्कजकुड्मलं
पुण्यबोधविरागभूतिपदं विलोमचतुष्टयम् ।
गात्रकं छदनद्वयं कमलं सकेसरकर्णिकं
शक्तिमण्डलसंघयुक्तमहं नमामि शिवासनम् ॥ १४ ॥

[3]पृथ्वीकन्दं कालतत्त्वान्तनालं लोकौघं तत्कन्दकं भावसूत्रम् ।
ग्रन्थिग्रन्थिं शुद्धविद्यासरोजं विद्येशानारूढपत्राष्टकं च ॥ १५ ॥

वामादिशक्तिगतकेसरकर्णिकाढ्य-
मर्कादिबिम्बसहितं वरयोगपीठम् ।
तत्र स्थितं हृदयतन्त्रगतात्ममन्त्र-
मूर्तिं च बीजगतमीशमहं नमामि ॥ १६ ॥

तत्कन्दं शतकोटियोजनमितं नालं परार्धान्तगं
ग्रन्थिः कोटिपरार्धपश्चिमसहस्राब्जं[4] च तल्लक्षकम्[5] ।

1 °स्राव° for °स्रावि°—A.
2 °गते व्योम्नि—B.
3 Verses 15 and 16 are omitted in B.
4 सहस्राख्यं चतुर्लक्षकम्—A.
5 °लक्षणम्—B. C.

मूर्तिस्तस्य च कोटिरीश्वरमयी तस्यार्बुदस्यार्बुदा-
म्भोजं मन्त्रमयं सदाशिववपुस्तद्ध्यानमेयः शिवः ॥ १७ ॥

यस्यामौषधभूषणध्वनिमयी मूर्तिः परा बैन्दवी
ध्येया शंकरमन्त्रतन्त्रनिरतैर्ज्ञानक्रियाङ्गी[1] शिवा ।
सर्वैश्वर्यसुखप्रदा निरुपमा सादाशिवा निर्मला
नादाख्याय सदाशिवाय महते शान्ताय तस्मै नमः ॥ १८ ॥

ध्येयः सदा गगनमण्डलमध्यवर्ती
निर्विघ्नशुद्धशिवयोगिहृदम्बुजस्थः ।
ईशोर्ध्वनिष्कलशिवान्तवपुः सदेशो
बिन्दुस्वरोद्भवकलाभुवनेशगर्भः[2] ॥ १९ ॥

योऽसावीशानमूर्धा नरमुखकमलोऽघोरहृद् वामगुह्यः
सद्योमूर्तिः पुरेशाननहृदयपदः षड्विधाध्वस्वरूपः ।
भूताम्भोराशिसिद्धिस्मरभुजगकलाक्लृप्तदेहः क्रियेच्छा-
दृग्भासार्धाम्बिकस्थं कपिलगतमहं नौमि विद्याशरीरम् ॥ २० ॥

श्वेतासृक्कृष्णपीतस्फटिकशशिसुवर्णारुणाख्याग्निवर्ण-
ब्रह्माङ्गैर्व्यक्तमूर्तिर्भवहरशिवसंयोगतः स्फाटिकाभम् ।
ऐक्यान्मन्त्रार्थयोरित्यखिलशिवमतेष्वाह सर्वार्थहेतु-
र्वक्त्राणां वर्णभेदश्चिदचिदधिपतेश्चित्रमेतत् स्वरूपम् ॥ २१ ॥

ईशानेन वियन्मयेन धवलप्रख्येन सर्वं विभो-
र्व्याप्तं वक्त्रचतुष्टयं पुरुषहृद्गुह्याजमन्त्रात्मकम् ।

[1] °निकर° for °निरतैः—D.

[2] °भवनेशगेहः—A.

तेनेदं धवलप्रभं शिवविदः पूर्वादिकाष्ठाभृतां
वर्णानुग्रहहेतुतः प्रतिमुखं पीतादिवर्णं विदुः ॥ २२ ॥

ईशतत्पुरुषाघोरवामाजवदनं शिवम् ।
बाल्ययौवनवृद्धस्त्रीनराकारं नमाम्यहम् ॥ २३ ॥

त्रिशूलखट्वाङ्गधरः सशक्तिर्वराब्जहस्तोऽभयपाणिरीशः ।
सेन्दीवराहिर्डमरुप्रसक्तः सबीजपूरः शुभदोऽक्षसूत्री ॥ २४ ॥

बोधानन्दमयी विभोर्भवभयप्रध्वंसकृच्छक्तय-
स्तिस्रस्ताः परिणामतश्च [1]विकृतिर्निःशेषबीजस्य हि ।
तत्पूर्णं प्रकृतिः कलाद्यभिमुखी दीर्घाक्षसूत्रं मनः
शंभोरस्त्रनिकाय [2]आगमवरैर्ज्ञेयः परो नापरः ॥ २५ ॥

ईशानं सर्वासां विद्यानामीश्वरं च सर्वभूतानाम् ।
ब्रह्मपतिं ब्रह्मत्वान्निष्कलरूपं सदाशिवं नौमि ॥ २६ ॥

तत्पुरुषं भक्तानां शैवज्ञानप्रदं महादेवम् ।
रुद्रं शिवतत्त्वसिद्ध्यै तत्त्वप्रेरकमहं[3] वन्दे[4] ॥ २७ ॥

अथ घोरमघोरं पशुपाशनिराकरणं घोरघोरतरम् ।
सर्वस्माच्छरणमहं शर्वं बहुरूपिणं वन्दे ॥ २८ ॥

वामं ज्येष्ठं रुद्रं कलविकरणबलविकरणकलान्तम् ।
बलप्रमथनं सर्वभूतदमनमनोन्मनमहं वन्दे ॥ २९ ॥

[1] °वीक्षति°—A; °विवृति°—B.

[2] परैः for वरैः—A. C.

[3] A. adds भक्तानाम्.

[4] B. ends here.

सद्योजातं सर्वज्ञं प्रणतानां भवभयापहरम् ।
अतिभवयोजकममलं भवोद्भवं नौमि जगदधिपम्[1] ॥ ३० ॥

श्रीमन्मूलमनूत्थनादशिखया ब्रह्मादिसादाशिव-
स्थानत्यागगतिक्रमोर्ध्वविलसद्व्योमान्तसंस्थाय[2] ते[3] ।
बोधानन्दमयाय सर्वविभवे नित्याय विश्वात्मने
शुद्धायामलतेजसे च महते तस्मै परस्मै नमः ॥ ३१ ॥

चन्द्रयुग्मगुणार्धमात्रतदर्धतद्दलषोडश-
द्व्युत्तरत्रिदशाब्धिषष्टिभुजंगमश्रवणक्षमाः ।
दर्शनेषुकरांशभावमितोन्मनीपरमासनं
यस्य तं प्रणतोऽस्मि निष्कलमव्ययं परमं शिवम् ॥ ३२ ॥

आदिपञ्चममृत्युभूषणचन्द्रखण्डगुणाश्रदृग्-
भानुगध्वनिसीरभास्करसेन्दुवृत्तहलाकृतिः ।
सांशुमत्त्रिशिखद्विबिम्बगतद्विकुब्जग उन्मनाः[4]
पातु वः सकलोऽपरः सकलाकलस्त्वकलः शिवः ॥ ३३ ॥

निष्कलं शिवरुद्रतद्दलभूषणार्धहिमांशुम-
द्रोधिदण्डतदन्तशक्तिचतुष्टयेश्वरयोगिनम् ।
शंकरं वसुसागराङ्गुलचारिणं रसशून्यगं
सर्वमन्त्रपतिं प्रसादमहं नतोऽस्मि षडध्वगम् ॥ ३४ ॥

चिद्व्यक्तिसंस्थित्यवलोकरोधै[5]र्मुद्रोत्तरैरङ्गशिवैकभावैः ।
पाद्याचमार्ध्यप्रसवप्रदानैस्त्वदर्चनं जन्मफलं महेश ॥ ३५ ॥

[1] C. ends here.
[2] °विमल° for °विलसद्°—A.
[3] °संस्थायिने—D.
[4] °कुब्जगतोन्मनः—D.
[5] मन्द्रोत्तरैः—A.

आवाहनं स्वात्मनि चित्प्रकाशस्तत्र स्थितिः स्थापनमीश्वरस्य ।
सांनिध्यमात्मेश्वरसंनिधानं संरोधनं च स्वशिवे निरोधः ॥ ३६ ॥

नमोऽस्तु संज्ञानहृदे भवाय नमो गुणैश्वर्यविशिष्टमूर्तये ।
नमोऽपराधीनशिवत्वरूपशिखाय तेजःकवचात्मने नमः ॥ ३७ ॥

नमः पशूनां मलकृन्तनक्षमासहप्रतापास्त्रकराय[1] शूलिने ।
नमोऽविकाराय षडङ्गमूर्तये सदाशिवायामृतरूपिणे नमः ॥ ३८ ॥

स्वभावशुद्धस्य शिवस्य पाद्यमाचम्यमात्मीयविशुद्धिहेतोः ।
अर्ध्यप्रदानं कुसुमार्पणं च सदेशधामाप्तिनिमित्तमेतत् ॥ ३९ ॥

स्नानं स्वात्ममलापहं शुभमयैर्गन्धैः समालेपनं
सद्वस्त्राभरणं सुगन्धिकुसुमैर्मालाभिरभ्यर्चनम् ।
सालंकारसदाशिवस्य विधिवद् धूपप्रदानं त्वणो-
र्भोगार्थं हि सदेशधाम्नि विमलं दीपं शिवज्ञानदम् ॥ ४० ॥

शुचीशरक्षपानिलेन्द्रमृत्युकेन्दुदिक्स्थितान्
पयोधरार्कवातवह्निसंनिभानलेक्षणान्[2] ।
युगाननान् वराभयत्रिशूलशक्तियुक्करान्
नमः शिवाङ्गसंभवान् हृदादिमन्त्रविग्रहान् ॥ ४१ ॥

भोगाङ्गार्चनमात्मनः शिवगुणप्राप्त्यर्थमैक्यं विभो-
रङ्गानां पुनरर्चकस्य शिवसंयोगाय शुद्धात्मनः ।
तृप्तस्यात्र निवेदनाम्बुमुखवासादिप्रदानं मन-
स्तृप्त्यर्थं शिव सर्वमङ्गलकरं चित्रं तवार्चाफलम् ॥ ४२ ॥

[1] °धराय—A ; °पराय—D.     [2] इनेक्षणान्—Comm.

पवित्रपूतस्य पवित्रदानं तापत्रयघ्नं सकलार्थसिद्ध्यै ।
जपश्च भक्त्या प्रणतिः शिवस्य ब्रह्मेन्द्रविष्ण्वादिपदत्वहेतुः ॥ ४३ ॥

अर्चने सकलं जपे सकलाकलं सततोदितं
निष्कलं सकलाध्वगं परिपूर्णमात्मसमर्पणे ।
व्योम्नि सुस्फटिकप्रभं भवने कलासहितं सुधी-[1]
र्यो हि वेत्ति परं शिवं शिव एव सोऽत्र न संशयः ॥ ४४ ॥[2]

अशुद्धतत्त्वौघबहिष्क्रियार्थं पराङ्मुखाख्यं परमेश्वरस्य ।
यस्मिन्नवस्थानकरं विसर्गं कुर्वन् स शैवं पदमभ्युपैति ॥ ४६ ॥

विप्रोत्तुङ्गश्चोलदेशैकसूर्यः शंभोः पूजास्तोत्रमेतत् पवित्रम् ।
. . . . . . . . भक्त्या चक्रे भुक्तये मुक्तये च ॥ ४७ ॥

[शिवपूजास्तोत्रं समाप्तम्]

---

## ४२. शिवमीडेस्तवरत्नम्[3]

### त्यागराजविरचितम्

स्वप्रकाशशिवरूपसद्गुरुं निष्प्रकाशजडचैत्यभासकम् ।
अप्रमेयसुगुणामृतालयं संस्मरामि हृदि नित्यमद्भुतम् ॥ १ ॥

1 हरं—D.

2 Verse 45 is missing in all MSS.

3 Based on the MS. No. PM. 644 (D. C. No. 1143) and it is collated with the *Śaṃkaragurukulapatrikā* (vol. V. No. 17, pp. 7-9). See note on the *Āryāpañcadaśīstotra* on page 98 above.

य: क्रीडार्थं विश्वमशेषं निजशक्त्या
सृष्ट्वा स्वस्मिन् क्रीडति देवोऽप्यनवद्यः ।
निस्त्रैगुण्यो मायिकभूमिव्यतिरिक्त-
स्तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ २ ॥

एको देवो भाति तरङ्गेष्विव भानु-
र्नानाभूतेष्वात्मसु सर्वेष्वपि नित्यम् ।
शुद्धो बुद्धो निर्मलरूपो निरवद्य-
स्तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ ३ ॥

देवाधीशं सर्ववरेण्यं हृदयाब्जे
नित्यं ध्यात्वा योगिवरा यं दृढभक्त्या ।
शुद्धा भूत्वा यान्ति भवाब्धिं न पुनस्ते
तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ ४ ॥

श्रौतैः स्मार्तैः कर्मशतैश्चापि य ईशो
दुर्विज्ञेयः कल्पशतं तैर्जडरूपैः ।
संविद्रूपस्वैकविचारादधिगम्य-
स्तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ ५ ॥

कर्माध्यक्षः कामिजनानां फलदाता
कर्तृत्वाहंकारविमुक्तो निरपेक्षः ।
देहातीतो दृश्यविविक्तो जगदीश-
स्तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ ६ ॥

नान्तर्बाह्ये[1] नोभयतो वा प्रविभक्तं
यं सर्वज्ञं नापि समर्थो निगमादिः ।

[1] °बाह्यो—MS.

तत्त्वातीतं तत्पदलक्ष्यं गुरुगम्यं
तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ ७ ॥

यद्भासार्को भाति हिमांशुर्दहनो वा
दृश्यैर्भास्यैर्यो न च भाति प्रियरूपः ।
यस्माद् भाति व्यष्टिसमष्ट्यात्मकमेतत्
तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ ८ ॥

आशादेशाद्यव्यवधानो विभुरेकः
सर्वाधारः सर्वनियन्ता परमात्मा ।
पूर्णानन्दः सत्त्ववतां यो हृदि देव-
स्तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ ९ ॥

कोऽहं देवः किं जगदेतत् प्रविचाराद्
दृश्यं सर्वं नश्वररूपं गुरुवाक्यात् ।
सिद्धे चैवं यः खलु शेषः प्रतिपन्न-
स्तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ १० ॥

सत्यं ज्ञानं ब्रह्म सुखं यं प्रणवान्तं
सर्वस्फूर्तिः शाश्वतरूपस्त्विति वेदाः ।
जल्पन्त्येवं स्वच्छधियोऽपि प्रभुमेकं
तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ ११ ॥

यस्माद् भीतो वाति च वायुस्त्रिपुरेषु
ब्रह्मेन्द्राद्यास्ते निजकर्मस्वनुबद्धाः ।
चन्द्रादित्यौ लोकसमूहे प्रचरन्तौ
तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ १२ ॥

मायाकार्यं जन्म च नाशः पुरजेतु-
नास्ति द्वन्द्वं नाम च रूपं श्रुतिवाक्यात् ।
निर्णीतार्थो नित्यविमुक्तो निरपाय-
स्तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ १३ ॥

नायं देहो नेन्द्रियवर्गो न च वायु-
र्नेदं दृश्यं जात्यभिमानो न च बुद्धिः ।
इत्थं श्रुत्वा यो गुरुवाक्यात् प्रतिलब्ध-
स्तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ १४ ॥

स्थूलं सूक्ष्मं क्षाममनेकं न च दीर्घं
ह्रस्वं शुक्लं कृष्णमखण्डोऽव्ययरूपः ।
प्रत्यक्साक्षी यः परतेजाः प्रणवान्त-
स्तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ १५ ॥

यत्सौख्याब्धेर्लेशकणांशोः सुरमर्त्या-
स्तिर्यञ्चोऽपि स्थावरभेदाः प्रभवन्ति ।
तत्तत्कार्यप्राभववन्तः सुखिनस्ते
तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ १६ ॥

यस्मिञ्ज्ञाते ज्ञातमशेषं भुवनं स्याद्
यस्मिन् दृष्टे भेदसमूहो लयमेति ।
यस्मिन्मृत्युर्नास्ति च शोको भवपाशा-
स्तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ १७ ॥

द्यां मूर्धानं यस्य वदन्ति श्रुतयस्ता-
श्चन्द्रादित्यौ नेत्रयुगं ज्यां पदयुग्मम् ।

आशां श्रोत्रं लोमसमूहं तरुवल्ली-[1]
स्तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ १८ ॥

प्राणायामैः पूतधियो यं प्रणवान्तं
संधायात्मन्यव्यपदेश्यं निजबोधम् ।
जीवन्मुक्ताः सन्ति दिशासु प्रचरन्त-
स्तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ १९ ॥

यच्छ्रोतव्यं श्रौतगिरा श्रीगुरुवाक्याद्
यन्मन्तव्यं स्वात्मसुखार्थं पुरुषाणाम् ।
यद् ध्यातव्यं सत्यमखण्डं निरवद्यं
तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ २० ॥

यं जिज्ञासुः सद्गुरुमूर्तिं द्विजवर्यं
नित्यानन्दं तं फलपाणिः समुपैति ।
भक्तिश्रद्धादान्तिविशिष्टो धृतियुक्त-
स्तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ २१ ॥

पृथ्व्यम्ब्वग्निस्पर्शनखानि प्रविलाप्य
स्वस्मिन् मत्या धारणया वा प्रणवेन ।
यच्छिष्टं तद् ब्रह्म भवामीत्यनुभूतं
तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ २२ ॥

लीने चित्ते भाति य एको निखिलेषु
प्रत्यग्दृष्ट्या स्थावरजन्तुष्वपि नित्यम् ।

[1] तरुवल्यः—MS.

सत्यासत्ये सत्यमभूच्च व्यतिरेकात्
तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ २३ ॥

चेतःसाक्षी प्रत्यगभिन्नो विभुरेकः
प्रज्ञानात्मा विश्वभुगादिव्यतिरिक्तः ।
सत्यज्ञानानन्दसुधाब्धिः परिपूर्ण-
स्तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ २४ ॥

सर्वे कामा यस्य विलीना हृदि संस्था-
स्तस्योदेति ब्रह्मरविर्यो हृदि तत्र ।
विद्याविद्या नास्ति परे च श्रुतिवाक्यात्
तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ २५ ॥

स त्यागेशः सर्वगुहान्तः परिपूर्णो
वक्ता श्रोता वेदपुराणप्रतिपाद्यः ।
इत्थं बुद्धौ ज्ञानमखण्डं स्फुरदास्ते
तं सर्वाघध्वंसकमाद्यं शिवमीडे ॥ २६ ॥

नित्यं भक्त्या यः पठतीदं स्तवरत्नं
तस्याविद्या जन्म च नाशो लयमेतु ।
किं चात्मानं पश्यतु सत्यं निजबोधं
सर्वान् कामान् स्वं लभतां[1] स प्रियरूपम् ॥ २७ ॥

इत्यानन्दनाथपादपद्मोपजीविना काश्यपगोत्रोत्पन्नेनान्ध्रेण त्यागराजनाम्ना विरचितं शिवमीडेस्तवरत्नं संपूर्णम्

---

[1] अलभत—MS.

# ४३. शिवस्तोत्रम्[1]

श्रीमद्वस्तु समस्तं व्याप्याकाशं निदानमानन्दम् ।
उपशमतः शिवमेकं सततं हृद्येव भावयेऽनन्तम् ॥ १ ॥

सदसद्रूपां मायां सच्चित्तुलितां समस्तजनयित्रीम् ।
देवात्मशक्तिमेकां सदयामुदयाय चिन्तयाम्यनिशम् ॥ २ ॥

यदपो बीजं सृष्ट्वा स्त्रीपुंसाभ्यां विराजमसृजदिदम् ।
सदसद्रूपं देवं परमवलम्बे हृदम्बुजोल्लासि ॥ ३ ॥

यन्मरणं हन्ति नृणां भक्तानामन्तरात्मपाशमयम् ।
तदमृतमवलम्बेऽहं दहरगतं ज्योतिषां ज्योतिः ॥ ४ ॥

धर्मार्थकाममोक्षाश्चत्वारो हन्त सन्ति पुरुषार्थाः ।
तद्विज्ञानं सरसं कृत्यामस्यां स्त्रियामिवोल्लसति ॥ ५ ॥

पश्यामि शास्त्रवार्धिं तदिदं कृतिसर्षपान्तरुल्लसितम् ।
कुक्षिस्थसर्वलोकं भगवन्तं मानसान्तरुदितमिव ॥ ६ ॥

सोऽकारो वर्णानामादिर्भगवान् जगन्मूलम् ।
अहमिति यद्वन्मूलं करणज्ञानस्य नित्यमनुभूतम् ॥ ७ ॥

विद्वत्तया फलं किं विस्मर्तुः सच्चिदङ्घ्रिपद्मनतिम् ।
यद्वन्मर्त्यजनोः किं हृदि मन्तव्यं विहातुरात्मानम् ॥ ८ ॥

[1] Based on the MS. No. 67780 (D. C. No. 1197). It is found written in the MS. in between the *Nijatattvāmṛtasāra* and *Rājayogatārāvali*, both Tāntrik works of Parameśvarayogin, the author of the *Kṣamāstotra* (see above page 151).

हृन्नीरजस्थसच्छ्रीपदसेवी भुवि चिरं समेधेत ।
योगीश्वरः सुषुम्नासुषिरालम्बं लसेदथाकल्पम् ॥ ९ ॥

इष्टानिष्टसुदूरश्रीपदभाजां न जातु भुवि कष्टम् ।
प्राणापाननिरोधज्योतिर्नाड्यां यथैव निरतानाम् ॥ १० ॥

न तमो न पुण्यपापे सद्भनवच्छलोकपरसमीपेऽपि ।
प्रत्यग्ज्योतिर्दहरे यद्वच्चिन्ता न नापि सुखदुःखे ॥ ११ ॥

आत्मानुपमाङ्घ्रिनतादन्यैः शक्या न हातुमात्मार्तिः ।
अन्तर्ज्योतिःस्फुरणादितरैर्यद्वत् तमो न वारयितुम् ॥ १२ ॥

योऽतीन्द्रियानलीकव्यवसितिपथिगश्चिरं स वर्धेत ।
अन्तर्धमनीरन्ध्राध्वन्यो यद्वत् कदापि न व्यथते ॥ १३ ॥

अष्टगुणाङ्घ्रेरनतं न शिरोगुणवन्निरार्तिकरणयुतम् ।
स्वात्मानुकूलकृत्ये विमुखं यद्वन्मनोऽपि न विवेकि ॥ १४ ॥

धर्माब्धिदेवचरणप्रणतान्नान्यैर्भवाब्धिरुत्तार्यः ।
चिन्तावार्धिस्तार्यो न यथा मनसो निरोधनादितरैः ॥ १५ ॥

प्रतरन्ति जन्मजलधिं न तरन्तीशाङ्घ्रिसेवकेभ्योऽन्ये ।
देहादिवासनाब्धिं यद्वद्यमिनो यथातथान्ये न ॥ १६ ॥

[इति श्रीशिवस्तोत्रं संपूर्णम्]

———

## ४४. शिवार्यास्तुतिः[1]

द्रुतकनकभासुराङ्गं कुमुदवनीबन्धुपाकचूडालम् ।
स्मेरलवमञ्जुलास्यं शैलसुताश्लिष्टमाश्रये देवम् ॥ १ ॥

करुणारसार्द्रनयनं करधृतविज्ञानमुद्रमतिभद्रम् ।
न्यग्रोधमूलभवनं न्यक्कृतनतमोहमानमामीशम् ॥ २ ॥

गाङ्गेयद्रवलहरीप्रौढतनुच्छायसुन्दरमुदारम् ।
हैमवतीरसनिर्भरनयनासेचनकनैजलावण्यम् ॥ ३ ॥

उद्यद्बहुविद्युद्गणहृद्यजटानद्धनिर्जरधुनीकम् ।
अङ्गजतनुभङ्गकलासंगतनिटिलाक्षतुङ्गभूमानम् ॥ ४ ॥

शंभो तावकविनुतौ विगलद्गर्वो हि भारतीजानिः ।
स्तुतिकाङ्क्षा मम तनुते ग्राव्णां तरणस्य जलनिधौ समताम् ॥ ५ ॥

विधिमाधवदुरधिगमं शीर्षं चरणं च तावकं गदितम् ।
वेद्यो भवसि कथं मे निटिलगता भाग्यरेखिका कीदृक् ॥ ६ ॥

गूढार्थैर्भव वेदैरर्थप्रवणैः पुराणवचनैस्त्वाम् ।
पुरुषमतिदुर्निरूप्यैस्तन्त्रैः शक्नोमि कथमहं वेत्तुम् ॥ ७ ॥

क्षित्यादि कार्यमखिलं सदधिष्ठानं सकर्तृकं गदितम् ।
कर्ता नैव जडः स्यादाद्यः शंभो श्रुतीरितस्त्वमिति ॥ ८ ॥

उत्पादकोऽसि जगतामकरोस्तरलं तु मामकं हृदयम् ।
गौरीपते कथं त्वं ध्येयो भूयाः किमस्ति मयि दोषः ॥ ९ ॥

[1] Based on the MS. No. 66071 (D. C. No. 1192, *Śivastotra*).

चापल्यादैन्द्रियकाद् ध्यातुं शक्नोमि नाद्य तव मूर्तिम् ।
अन्ते सविधकृतान्ते शंभो शक्ष्यामि कथमहं श्रान्तः ॥ १० ॥

कृतकेतरवचनाञ्चलपटलीपेटीनिगूढनिहितं ते ।
नगजाजाने जानेऽमानं महिमानमिह कथं मूढः ॥ ११ ॥

पूर्णं चिद्घनमेकं त्वामिन्द्रं वरुणमर्कमीशानम् ।
मायावञ्चितहृदया ब्रुवते वागिति सनातनी ब्रूते ॥ १२ ॥

उल्लङ्घ्य तावकाज्ञामुडुपतिशकलावतंस रचितागाः ।
भवशततापग्लपितः शरणं त्वामेव निस्त्रपः प्रापम् ॥ १३ ॥

अगतिमधुना वराकं श्रान्तं नितरां भवाब्धिपतितं माम् ।
तारय कटाक्षनावा करुणावरुणालयोऽसि विश्वेश ॥ १४ ॥

अन्तर्यामिणमाह त्वामेवाकृतकभारती यस्मात् ।
ज्ञातमहो हतहृदयं वारितमपि तेन मद्वशं नैति ॥ १५ ॥

अभवोऽसि देव यत् त्वं वेत्सि भवोद्दामयातनां नातः ।
दीनपरिदेवनं मे श्रुत्वापि त्रातुमुद्यतो नाद्य ॥ १६ ॥

पतितमपि पादपतितं पावनचरितं तनोषि गुणभरितम् ।
आद्यतमावद्यतमो ह्यनवद्याद्य वारयाच्छिद्य ॥ १७ ॥

अर्धाङ्गीकुरुषे तामार्यामुन्मत्तशेखरो यस्मात् ।
ऊरीकृत्यावसि मां कामिनमिति किं नु धैर्यमवलम्बे ॥ १८ ॥

श्रुत्यञ्चलमञ्चगतो मां चलमनसं विहाय नगजेश ।
वञ्चयसि किं चरेयं चञ्चासदृशस्त्वकिंचनः किंच ॥ १९ ॥

रक्षितुमखिलाध्यक्ष त्र्यक्ष सुदक्षोऽप्युपेक्षसेऽपक्षम् ।
नेक्षे रक्षकमितरं मात्रोपेक्ष्यं किमीक्षते पथिकः ॥ २० ॥

दूने सुकृतविहीने वृजिनविताने गिरीश धृतमाने ।
करुणां निधेहि दीने न शिवाजाने विधानमिह जाने ॥ २१ ॥

कतिवारं नतिवाकं श्रुतिशतनुत पतितपावन ब्रूयाम् ।
लीलाशतलोलाखिलपालाहतकाल पालयाभीलात् ॥ २२ ॥

धीरे जलधिगभीरे करुणासारे परीतसुरवारे ।
गौरे विषयविदूरे जलधरचिकुरे हरे मनो मेऽस्तु ॥ २३ ॥

शूरे संवित्सारे क्षितिभृदगारे फणीन्द्रकृतहारे ।
मस्तकधृतजलपूरे सर्वोदारे ममास्तु नतिवाकः ॥ २४ ॥

[इति श्रीशिवार्यास्तुतिः समाप्ता]

---

## ४५. शिवाष्टकम्[1]

(पैङ्गनाडु) गणपतिशास्त्रिकृतम्

[व्युत्पत्तिर्नैव शास्त्रेषु तथा काव्येषु चापि न ।
केवलं शिवपादाब्जस्मरणात् कवयाम्यहम् ॥ १ ॥

[1] Based on the single MS. No. |PM 255 (D. C. No. 1218). There are some lacuna as the MS. is much damaged. First two verses are separately numbered in the MS.

विनम्य विपथाग्रजीविहितलिप्सवीक्षालवं
विनम्रजनसंततेर्विहितसंततज्ञानकम् ।
विभुं विमलयामिनीविधुकिशोरकेशावलिं
गणेशविदुषाधुना निजकृतिस्तु लेलिख्यते ॥ २ ॥]

पाकारिप्रभृतीन् सुरानवति यो नाकारिसंघात् सदा
पाकात् पुण्यकृतेः स्वपादयुगलीस्वाकाङ्क्षचित्ताय यः ।
स्वाकारं ददते सतोषमधुनोमाकामुक त्वं प्रभो
मा कार्षीर्मयि कोपलेशमपि यल्लोकानुकम्पी भवान् ॥ १ ॥

चन्द्रो यन्मुखकान्तितुल्य इति तं लोकत्रये दुर्लभं
मत्वा द्रष्टुमतीव तोषसहितो विष्णुः परामृश्य च ।
अक्ष्येवैकमचीक्लपत् तमधुना पापौघभृङ्गावली-
भेदे वज्रधरः स्वयं शिवमिदं वित्तं हि जिज्ञासते ॥ २ ॥

चन्द्रं वीक्ष्य यदीयमाननमिति भ्रान्त्या सरोजव्रजो
भामां प्राचि भरिष्यति च्छविभिरित्यालोच्य भीत्याकुलः ।
आकाङ्क्षन्निव तत् प्र[भातमधुना]प्यास्ते नमन्मूर्धकं
तत्तादृग्वदनाम्बुजाय शिव ते वीधीय(?)नित्यं नतिम् ॥ ३ ॥

पादाम्भोजयुगे हि यस्य विनमद्ब्रह्मादिदेवच्छटा-
कोटीरस्थितदेवराण्मणिगणस्फूर्त्युत्थिताच्छच्छविः ।
तादर्थ्याम्बुजसंघसङ्गिविलसद्भृङ्गार्दनाङ्गोऽपि मां
सोऽयं मन्दिरयत्यमन्दकुतुकादानन्दकन्दो मनः ॥ ४ ॥

यत्पादाब्जयुगं स्वकान्तिसमतावाञ्छं सरोजव्रजं
जित्वा स्वच्छविभिर्मृणालनिवहव्याजैरहो रश्मिभिः ।

बद्ध्वाग[ाज्जनिमा]प तज्जलनिधौ भक्तेष्टदातः प्रभो
स्वच्छन्दं विजरीहरीतु मम हृत्सौधे पदाब्जं तव ॥ ५ ॥

यस्त्वल्लोचनकान्तिनीलजलदः पापौघदावानलं
दाम्यन् निश्चलभक्तियुक्तजनताहृच्चातकानां मुदा ।
आत्मानन्दमयीं तनोति सततं तृप्तिं दयाम्भोनिधे
तृष्णादग्धमनन्यदेवशरणं हृच्चातकं पातु नः ॥ ६ ॥

यस्येशस्य दिनेशरूपमपि यन्नेत्रं दयाशीतल-
च्छायं स्वस्य हि रश्मिभिर्विनतहृत्पाथोजसंघं सदा ।
संतोषेण महाविकासभरितं संतन्यते शंकर
त्वत्तत्तादृशलोचनेन मम हृत्पद्मं तथा तन्यताम् ॥ ७ ॥

लीलालोलकटाक्षदग्धमदनः कालान्तकः सर्परा-
ण्मालालंकृतसर्वगात्ररुचिरो हालाहलोद्यद्गलः ।
चूलानन्तशिरःकिरीटसुरराण्मौलीविराजत्पदो
फालालंकृतभूतिरप्युपनिषज्जालस्तुतः पातु नः ॥ ८ ॥

रसलेशविवर्जितां प्रभो नुतिनाम्नीमधुना प्रलापवाचम् ।
स्तुतिमेव गृहाण धूर्जटे निजभक्ताधिकतोषदानदक्ष ॥ ९ ॥

इति श्रीमच्छिवाष्टकं संपूर्णम्

— ———

# ४६. सप्तस्थानचूर्णिका[1]

अस्ति खलु सप्तसागरसप्तकुलाचलसप्तद्वीपपरिमण्डिते भूमण्डले पञ्चाशत्कोटियोजनविस्तीर्णे जम्बूद्वीपो रत्नद्वीपः। तत्रात्युत्तमाः षट्पञ्चाशद् देशाः। तेष्वपि अनेककोटिसुरालयभूसुरालयमण्डितश्चोलदेशः। तस्मिन्नपि अपरिमितहरिहरालयविबुधकोटिसंकीर्णसह्यजातीरस्थलानि सर्वोत्तमानि। तेष्वपि एतावत्त्वरहितवैभवं साक्षाद्दाक्षायणीपतिनिवासभूतं सहस्रवदनेनापि सहस्रकोटियुगैरपि वर्णितुमशक्यमवाङ्मनसगोचरमत्यद्भुतवैभवमनाद्यं किंचिदस्ति स्थलम्। तस्मिन् वृन्दारकपतिनन्दनवनशोभिमन्दारमुखवृन्दारकतरुसंदोहसंदेहकरमाकन्दकुन्दतिन्दुकचन्दनचम्पकचाम्पेयपनसपाटलप्रियालहिन्तालतालतमालकृतमालनक्तमालतक्कोलरसालवकुलसरलतिलकामलकजम्बुजम्बीरखर्जूरनालिकेरदाडिमद्राक्षानारङ्गबदरीवि-

[1] Edited from the single MS. No. 66259 (D. C. 3134). It is an eulogy on the God Pañcāpageśa at Tiruvayyāru on the occasion of the Saptasthāna festival. The names of the *sapta-sthāna-s* (seven shrines within a mile from each), the deities and their consorts referred to in the text are:

(1) Tiru-vayyāru (Śrī-Pañcanada)—Praṇatārtihara—Dharmasaṃvardhanī.
(2) Tirup-payaṇam (Śrī-Prayāṇa)—Āpatsahāyeśvara—Bṛhadambā.
(3) Tiru-śoṟṟutturai (Śrī-Odaneśvara)—Odaneśvara—Asadṛśanāyakī.
(4) Tiru-vedakuḍ(ṭ)ī (Śrī-Vedakuṭī)—Vedapurīśvara—Maṅgalanāyakī.
(5) Tiruk-kaṇḍiyūr (Śrī-Khaṇḍīśvara)—(Brahmaśiraḥ-) Khaṇḍīśvara—Maṅgalāmbikā or Maṅgalanāyakī.
(6) Tirup-pūnturutti (Śrī-Puṣpavana)—Puṣpavaneśvara—Saundaranāyakī.
(7) Tiru-naittānam (Śrī-Ghṛtasthāna)—Ghṛtasthāneśvara—Bālāmbikā.

ल्वकपित्थकदलीपटलजटिलघटविटपुटतटकुटजलिकुचपलाशचिलपुंनागनागकिंशुक -
बन्धूकच्छायकजीवकाशोकहिन्दूककेतकरसपूर्णगन्धपूर्णिमुचुकुन्दरसगन्धघनबृन्दपु-
लिन्दवकुलवञ्जुलकरलकोमलस्फूर्जविस्फूर्जविदारकोविदारकूर्मारमन्दारतुम्बीरार्जुन -
तर्जनविकर्जनकदम्बकादम्बहेरम्बविलम्बतुम्बकुरम्बाश्वकर्णगोवर्णगोकर्णगोचूर्णघन -
सविघसवरुणतरुणतरङ्गविचुलिङ्गविबधवनयक्षफलयक्षधवसूधवमाधवमरुधवपुरीधव -
सिन्धूपनिक्षीपदीपनीपप्रदीपभूपगोपोपकूपवितपलतितपलमरुत्पलवीरवीरवसुवीरफलपू -
रबीजपूरकन्दसारतिन्त्रणघन्त्रणयन्त्रणबोधसंबोधन्यग्रोधहिम्बुमल्लीमतल्लीबल्लीवीरवल्ली -
वसन्तीवासन्तीजीवन्तीजवन्तीजातीहेमजातीविदूतीविशालीवेशालीतुलसीकुमुदोत्पल -
नीलोत्पलमालतीमाधवीमधुकरपङ्कजपारिजातप्रमुखनिखिलभूरुहलतामण्डलनिरन्तर -
दलकुसुमफलभरितविटपावृतोद्यानसुशोभिते, कृतपातकपामरजनपावनकरणनिपुण-
कावेरीशीतलजलस्पृष्टमन्दमलयमारुतसंपर्कविकसितकेतकीचम्पकमल्लिकादिकुसुम -
घुमुघुमितवासनानन्तभरितविबुधनिकरे, अखिलप्रपञ्चस्थलसंचारापूरणमनोरथचन्द्र-
शेखरचरणारविन्दमकरन्दनिश्चञ्चलचञ्चरीकायमानविरिञ्चतनयादिमुनिसंचयतपः -
संचयसिद्धिप्रदे मुक्तिप्रदे, नित्योत्सवपक्षोत्सवमासोत्सवसंवत्सरोत्सवरथोत्सवडो-
लोत्सववसन्तोत्सवपुष्योत्सवपुष्पोत्सवप्रजो[? प्लवो]त्सवविजयोत्सवमहोत्सवमहावैभवे,
चैत्रोत्सवपञ्चमदिनकृतात्मपूजानन्दभरितमहेश्वरवृषभवाहनमहारथोत्सवसंदर्शनागत -
**सप्तस्थल**देवतागणसुरगणमुनिगणनिबिडीभूतनृत्तगीतवाद्यसंगीतसंघोषसंतोषितच -
तुर्वर्णजनकोटिसंसेविते प्रपञ्चसंरक्षणदीक्षिते शक्रतपञ्चाक्षरतारकमन्त्रोपदेशपञ्चशरा-
रिशरीरदायके **पञ्चनदस्थले** यो देवः सकलकोटिदेवेषु महादेव इति सकलकोटि-
विबुधैः सततं संपूज्यते स भगवान् **धर्मसंवर्धनीशः** जगदीशः, चन्द्रामृतसूर्य-
पुष्करणीजलजटामण्डलस्थगङ्गातोयगिरिजापयोधरक्षीरवृषभफेन**पञ्चनदीपतिः** पशु-
पतिः, विशिष्टमहामुनिवरिष्ठवसिष्ठभगिनीविवाहमहोत्सवसंतोषितनन्दिकेश्वरसमेतः
गिरिजासमेतः **सप्तस्थल**प्रदक्षिणागमनस(द)हृदयः सदयः सुरथमहीपतिमनोरथ-
पूरणसंदर्शितदक्षिणोत्तरकैलास(भण्ड)भर्मनिर्मितप्राकारगोपुरविमानगर्भगृहार्धमण्टप -
महामण्टपस्नपनमण्टपपूजामण्टपपुष्यमण्टपनृत्तमण्टपनाट्यमण्टपसोपानप्रदक्षिणमण्ट-

पाश्वमेधप्रदक्षिणमण्टपजपतपःसिद्धिकरजप्येश्वरमण्टपशान्तमण्टपदान्तमण्टपवसन्त-मण्टपोद्यानमण्टपश्रीविलासमण्टपश्रीचूर्णमण्टपकृष्णगन्धमण्टपपारार्तिकमण्टपकौतु-कमूक्त(मत)मण्टपवेदशास्त्रसर्वपुराणव्यवहारमण्टपहरिब्रह्मेन्द्रादिसमूहमण्टपाष्टा-दशवाद्यघोषमण्टपरत्नमण्टपपुष्पसुगन्धपरिमलविलासमण्टपधर्मसंवर्धनीसकलभोगभो-ग्यमण्टपविचित्रचित्राङ्कितमण्टपोपमण्टपमहामण्टपचतुःस्तम्भमण्टपषोडशस्तम्भमण्टप-शतस्तम्भमण्टपसहस्रस्तम्भमण्टपानेकस्तम्भमण्टपादिमण्टपविराजितमहालयविनिर्गतः, अतिधवलितघुमुघुमायमाननवकोटिमल्लिकाहारमुक्ताहारमुकुरवरनिकरसिंहमुखशरभ-मुखकनकदण्डमण्डितनवरत्नमणिखचिततप्तकाञ्चनशिबिकासुस्थितः मुनिहृदि स्थितः, अपहसितचन्द्रमण्डलश्वेतच्छत्रोभयचामरवालव्यजनपताकादिसकलबिरुदादिविराज-मानः सकलविबुधसंस्तूयमानः भेरीमृदङ्गमद्दलतालकाहलदुन्दुभितूर्यतुम्बुरुवीणावे-णुनूपुरमड्डुकडिण्डिमडमरुकजर्झरधवलशङ्खपणवपटहाष्टादशवाद्यघोषसमेतशब्दा-यमानसकलदिगन्तरः नानाविधवर्णसुवर्णपुष्पस्तबककोटिदेदीप्यमानमलयचन्दना-गरुगुग्गुलुगोघृतघनसारधूपवर्तिदिव्यपरिमलवासनादिघुमुघुमायमानसकललोकः सं-रक्षितसकललोकः हाटककटककेयूरनूपुरहारविराजितकलेबरः कटितटसुघटित-हेमाम्बरः चण्डकिरणमण्डलरुचिषण्डकखण्डकमणिखचितमुकुटमण्डितशशिखण्डः रत्नकुण्डलशोभितगण्डः ताराधिपसेवारतमुक्ताहारायिततारालिविराजितः मारायुत-कोटिसुकुमाराकृतिः माराराातिः शरणागतशतकोटिजनशतकोटिपापगिरिशतकोटिः धूर्जटिः **सप्तस्थल**प्रदक्षिणविचक्षणपदक्रमश्रुतिस्मृतिसुलक्षणलक्षकोटिब्राह्मणोत्तम-कृतवेदपारायणश्रवणपरमानन्दभरितः गानविशारदनारदसंनिभपरमभागवतोत्तमकृत-दिव्यनामसंकीर्तनश्रवणहर्षपुलकाङ्कितदेहः **धर्मसंवर्धनी**विलसदर्धदेहः भक्तापद-न्धतमःसप्ताश्व**बृहदम्बा**सहित-**आपत्सहायेश्वर**ाभ्यागमनसंमानसंपूजितः **श्रीप्र-याणस्थल**निकटघटितपटहभेरीवाद्यडमडमध्वनिश्रवणससंभ्रमसंदर्शनाय समुत्थित-दिवाकरः करुणाकरः अनेककोटिभूसुरवरान्नदाननिपुण-**असदृशनायकी**सहित-**ओदनेश्वर**प्रत्युत्थानबहुमानसंपूजितः चतुर्वेदोद्धारणनिपुण**मङ्गलनायकी**सहित-**वेदपुरीश्वर**सपर्यासंमोदितमानसः मुनिजननिहितमानसः अखिलभूसुरवराद्यनेक-

कोटिभक्तजनसूर्यातपपरिश्रमापनोदनकामो भक्तपराधीनः चराचरप्रपञ्चनिर्माणचतुर-चतुराननशिरःखण्डनपण्डित**मङ्गलनायकी**सहित**खण्डीश्वर**ालयस्थः एलोशीरलवङ्ग-संवासितबहुशीतलस्वच्छजलशुण्ठीरामठसैन्धवजम्बीरफलसारबहुरुचिरतक्रशर्करामि-श्रितगोघृतसंसिक्तपृथुकपानकपादुकाव्यजनच्छत्रमुद्गखण्डचणकखण्डखण्डशर्करापन-सचूतकपित्थकदलीफलपटलीप्रदानसुगन्धचन्दनालेपमल्लिकाहारपुष्पपरिशोभितकण्ठ-परमसंतुष्टब्राह्मणकोटिसमीरितवेदघोषायमाण**खण्डीश्वर**ालयः करुणालयः सुरवर-मुनिवरभूसुरवरदायकत्रिपुरसंहारविशारद**सौन्दर्यनायकी**सहित**पुष्पवनेश्वर**पुष्य-मण्टपस्थः उभयकावेरीमध्यप्रदेशानन्दकरमन्दगमनसंदर्शनागतब्रह्मऋषिदेवऋषिय-क्षगन्धर्वकिंनरकिंपुरुषसिद्धसाध्योरगभक्तजनसुरकोटिभूसुरवरकोटिभासुरमुनिकोटि-**घृतस्थानेश**निकटकावेरीमध्यप्रदेशः गौरीशः मरतकमणिखचितकनकशिबिकाम-कुटकुण्डलकटकभासापहृतसकलतेजोजातपरिभवासहमानकोपारुणवर्णपश्चिमसाग-रपततपतङ्गः कोमलाङ्गः अर्धास्तमनसमयकृतसंध्यावन्दनोपस्थानजपहोमवेदपाराय-णबहुनिपुणभूसुरपरिश्रमापनोदनाय फालाक्षानलदग्धमदन**बालाम्बिका**सहित**घृत-स्थानेश्वर**सुखस्थलालयस्थः समकालसमुद्यत्कोटिसूर्यसमानसहस्रकोटिदीपपङ्क्ति-दीपवृक्षदीपरत्नदीपरथदीपनानाविधवह्नियन्त्रकोटिदेदीप्यमानमहामार्गप्रदेशमन्दगम-नमन्दहासभरितः सकलवाद्यसंगीतसंघोषसंतोषितचतुर्वर्णजनकोटिसंसेवितः अम्भोज-संभवसुरसंभ्रमकाङ्क्षितशातकुम्भकुम्भकुचकुम्भसंभासितरम्भादिसुरतरुणिकृतरमणीय-नाट्यविराजितचतुर्वीथीमार्गः भक्तसंदर्शितसन्मार्गः निटिलतटलसितसितविभूति-जटिलघटतनयमुखमुनिपटलपटुतरसुरयोगिबृन्दवन्दितदिव्यश्रीचरणारविन्दः सुन्दर-सोमास्कन्दमूर्तिः **प्रणतार्तिहर**विख्यातकीर्तिः करुणामूर्तिः श्रीसाम्बमूर्तिः पञ्चमहा-पातकेभपञ्चानन**पञ्चनदस्थल**ालयान्तःप्रविष्टः कर्पूरनीराजनविराजमानकर्पूरगौर-शरीरसंदर्शनायातसकलकोटिभक्तजनाभीष्टः सकलदेववरिष्ठः सकलजगदीशः **धर्म-संवर्धनीशः** मम हृदन्तरे निरन्तरं निवसन् पातु मां पातु मां **पञ्चनदीशः** ।

इति श्रीसप्तस्थानचर्णिका समाप्ता

# ४७. सभापतिस्तोत्रम्[1]

यत्कारुण्यकटाक्षवीक्षणमहो जन्मादिदुःखापहं
यत्पादाम्बुजसेवनं तनुभृतां स्वात्मावबोधाङ्कुरम्
यन्नामस्मरणं कृतान्तपरिहृत् संसारिणां तारकं
तं वन्दे गिरिजासहायममलं श्रीचित्सभानायकम् ॥ १ ॥

लोकानाहूय सर्वान् डमरुकनिनदैर्घोरसंसारमग्नान्
दत्त्वाभीतिं दयालुः[2] प्रणतभयहरं कुञ्चितं पादपद्मम् ।
उद्धृत्येदं विमुक्तेरयनमिति कराद् दर्शयन् प्रत्ययार्थं
बिभ्रद् वह्निं सभायां कलयति नटनं यः स पायाच्छिवो नः ॥ २ ॥

[3]न परं पुरमस्ति पौण्डरीकाच्छिवगङ्गासदृशी न कापि सिन्धुः ।
अपि हेमसभानिभा न गोष्ठी नटराजादधिको न कोऽपि देवः[4] ॥ ३ ॥

विभूतेरणुमात्रेण त्रिकालमनुलेपनम् ।
रोम रोम भवेल्लिङ्गं तच्छरीरं शिवालयम् ॥ ४ ॥

आर्द्रायामरुणोदयस्य समये चापे च लग्ने युते
पर्वं युक्तमयुक्तमेव नटनं सृष्ट्यादिमष्टोत्तरम् (?) ।
. . . . . .
[5]देवैर्दानवमानुषाः सहगणाः संसेव्य मुक्तिप्रदम्[6] ॥ ५ ॥

[1] Based on the MS. No. VB 347. This seems to be a collection of stray verses connected with the God at Chidambaram. The eighth verse is the *nāndīśloka* of the *Mudrārākṣasa*.

[2] दयालोः—MS.

[3] MS. adds: नटेशाय नमः.

[4] MS. adds: नटराजसभेशाय परमगुरवे नमः.

[5] One *pāda* is missing.

[6] MS. adds: आर्द्राप्रमाणम्.

तेजो रौद्रमिदं शिवेन जगतो रक्षार्थमुत्पादितं
भूतप्रेतपिशाचरोगशमनं कालाग्निरुद्रात् स्वयम् ।
इष्टार्थप्रदमिष्टलोकगतिकृत् सिद्ध्यष्टकापादनं
भस्मेदं यदि निर्मलं गुरुकृपालब्धं सदा रक्षतु ॥ ६ ॥

शिवाच्युतभगे ऋक्षे चापमेषयुगे रवौ ।
कन्याकुम्भचतुर्दश्यां सिते स्नानं सभापतेः ॥ ७ ॥

धन्या केयं स्थिता ते शिरसि शशिकला किं नु नामैतदस्या
नामैवास्यास्तदेतत् परिचितमपि ते विस्मृतं कस्य हेतोः ।
नारीं पृच्छामि नेन्दुं कथयतु विजया न प्रमाणं यदीन्दु-
र्देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद् विभोर्वः ॥ ८ ॥

भगवन् भूतभव्येश न जाने हितमात्मनः ।
त्वमेव संचिन्त्य विभो हितं मे दातुमर्हसि ॥ ९ ॥

इति श्रीसभापतिस्तोत्रं समाप्तम्

---

## ४८. स्मरगौरीशस्तवः[1]

भगवत्पादयतीश्वरममलं परशिवलीलाकलितशरीरम् ।
परमतभेदनिरासनचतुरं परमं गुरुवरमाश्रय इह तम् ॥ १ ॥
स्मर गौरीशं स्मर गौरीशं स्मर गौरीशं पापमते ॥ ध्रुवपदम् ॥

[1] Based on the single MS. No. 77442 (D. C. No. 1236). It is on the model of the *Bhajagovindastotra* (also known as *Mohamudgara*) of Śaṃkarācārya as is expressly stated in the last but one

यस्मादेतद् विश्वमशेषं समभूद् येन समन्वितमन्ते ।
लयमपि गच्छेत् परमानन्दे परशिवरूपपरात्परतत्त्वे ॥ २ ॥ स्मर गौरीशं० ॥

मायाशक्तिः समजनि यस्मात् त्रिगुणव्यक्तिं सृजते कार्यम् ।
यदनु क्रमतः सकलं जनितं परशिवरूपे परमाधारे ॥ ३ ॥ स्मर गौरीशं० ॥

यन्मुखचरणौ हरिधातारौ द्रष्टुं यातौ तिर्यग्भावम् ।
दिवि भुवि नेशौ समभूतां तौ परमं दैवं नास्ति यतोऽन्यत् ॥ ४ ॥ स्मर गौरीशं० ॥

यत्प्राप्त्यर्थं कर्म समस्तं नालं योगः सांख्यमतं वा ।
भक्तिग्राह्यं परमानन्दं भवरोगैकनिवारणचतुरम् ॥ ५ ॥ स्मर गौरीशं० ॥

लिङ्गे वार्चां कुरुते मर्त्यो यस्य परस्य प्रतिपत्त्यर्थम् ।
तस्य समीपं वाप्यथ गन्तुं बिभ्यति दूताः शमनस्यापि ॥ ६ ॥ स्मर गौरीशं० ॥

यस्माद् भीत्योदेति विवस्वान् वातो वात्यपि भीत्या यस्मात् ।
सर्वं शास्ति यदन्तस्तिष्ठन्नन्तर्यामिश्रुतिकथितो यः ॥ ७ ॥ स्मर गौरीशं० ॥

वर्णाश्रमिकृतकर्म समस्तं यत्प्रीत्यर्थं क्रियते चेत् तत् ।
सम्यग् भवतीत्युक्तमतोऽन्यः को वा देवो भवतीशानात् ॥ ८ ॥ स्मर गौरीशं० ॥

यो वै रुद्रो भगवानिति यं श्रुतिरपि साध्वी सकलात्मानम् ।
प्राह परेशो मोक्षद इति च स्वाहावचनादाथर्वणगात् ॥ ९ ॥ स्मर गौरीशं० ॥

शतरुद्रीयं जपतां विदुषां सर्वक्लेशविनाशनमूचे ।
यदनुग्रहतः सर्वनराणां भुक्तिर्मुक्तिर्भवत इहेति ॥ १० ॥ स्मर गौरीशं० ॥

verse of this Stotra. It also resembles the *Upadeśaśikhāmaṇi* of Tyāgarāja, disciple of Ānandanātha. See *Malayamāruta*, ed., V. Raghavan, Tirupati, 1966, pp. 25-7 and also D. C. of Vedānta MSS. (vol. IX) in the Adyar Library, Nos. 770-1.

शिव शंकर हर भक्तशरण्येत्यनिशं पठतां नतिनुतिसमये ।
पापविनाशं कुरुते भगवान् परशिवभावप्रकटनमपि च ॥ ११ ॥ स्मर गौरीशं० ॥

श्रीमद्व्याघ्रपुरस्थितममलं चित्सुखनटनविराजितचरणम् ।
देवमुनीश्वरसेवितविभवं चिन्तकसज्जनभावितसुषमम् ॥ १२ ॥ स्मर गौरीशं० ॥

वेदान्तेषु यमाहुरजस्रं विश्वाधिक इति सर्वमुनीन्द्राः ।
मूर्त्यष्टकवपुषं कथयन्ते केचित् सुधियः सकलात्मानम् ॥ १३ ॥ स्मर गौरीशं० ॥

विजयी भव हे परमेश्वर भो विश्वोत्तीर्ण विभो परमात्मन् ।
मम हृदि भासित मङ्गलमूर्ते कुरु तव चिन्तारसिकं हृदयम् ॥ १४ ॥ स्मर गौरीशं० ॥

गुणवैतृष्ण्यं परवैराग्यं गुणचिन्तानां यमनिष्ठानाम् ।
यत्कृपयात्मशिवैक्यपराणां न भवेज्जननीजठरे वासः ॥ १५ ॥ स्मर गौरीशं० ॥

कणभुग्वादपरिश्रमतो वा जैमिनितन्त्रकृतश्रमतो वा ।
न भवति जन्मशतेष्वपि मुक्तिः शिवचरणं भज मुक्तिनिदानम् ॥ १६ ॥स्मर गौरीश०॥

नित्यं शुद्धं बुद्धं मुक्तं त्वक्षरमनुभवगम्यं पूर्णम् ।
यं शिवमेकं पश्यन्तोऽमी संगच्छन्ते कृतकृत्यत्वम् ॥ १७ ॥ स्मर गौरीशं० ॥

इन्द्रं विष्णुं ब्रह्माणं वा ध्यायन्तस्ते यत्कृपयैव ।
क्रमतोऽवाप्य सदाशिवभावं परमोदाराः स्युर्भयहीनाः ॥ १८ ॥ स्मर गौरीशं० ॥

सामान्यात्मतया हि समस्तं प्रविलाप्यैतत् स्वप्नसदृक्षम् ।
यं पश्यन्ति ज्ञानसमाधौ शिवमद्वैतं प्रत्यक्प्रवणाः ॥ १९ ॥ स्मर गौरीशं० ॥

जीवन्मुक्ततया कृतकृत्या अपि विद्वांसः परमेशस्य ।
प्रारब्धक्षयपर्यन्तं ते भक्तिं कुर्वन्तीति हि शिष्टाः ॥ २० ॥ स्मर गौरीशं० ॥

अन्वहमेतत् परशिवभजनं बुधरमणीयं भवतीत्याहुः ।
श्रुतयः स्मृतयः सुधियो लोके कलितरणादिसमस्तपुमर्थम् ॥ २१ ॥ स्मर गौरीशं० ॥

काशीपुरवरवासपराणां कलिकल्मषहरतीर्थरतानाम् ।
प्रदिशति भगवानन्तिमसमये भवभयतारकतारकबोधम् ॥ २२ ॥ स्मर गौरीशं० ॥

सवितुर्देवस्यान्तर्हृदये तिष्ठन् भर्गो बुद्धिं नोऽसौ ।
ईष्टे सोऽक्षिण्येकतयोक्तो गायत्र्याख्यच्छन्दोवचसाम् ॥ २३ ॥ स्मर गौरीशं० ॥

न शिवादधिकं श्रुतिशासनतो न शिवादधिकं स्मृतिशासनतः ।
न शिवादधिकं मुनिशासनतो न शिवादधिकं गुरुशासनतः ॥ २४ ॥ स्मर गौरीशं० ॥

[1]भजगोविन्दस्तुतिरिह कथिता भगवत्पादयतीश्वरगुरुभिः ।
तत्कृपयैव शिवस्तवनं मे कृतमिति सन्तः करुणां कुर्युः ॥ २५ ॥ स्मर गौरीशं० ॥

सोमकलाधरशंभोरेतत् स्तोत्रं यः पठतीह मनुष्यः ।
स हि भुवि धन्यः स हि भुवि मान्यः स हि भुवि भक्तः स हि भुवि मुक्तः ॥
स्मर गौरीशं स्मर गौरीशं स्मर गौरीशं पापमते ॥ २६ ॥

इति श्रीस्मरगौरीशस्तवः संपूर्णः

---

[1] MS. reads भजगौरीशस्तुति°

## ४९. हरस्तुतिः[1]

श्रीनिवासविरचिता

प्राग् दयतां गणनाथो विद्यां वितरितुमुदारकालीनाम् ।
आद्रियतां गणनाथो बहुधा बृन्दारकालीनाम् ॥ १ ॥

हिमकरकलिकोत्तंसः शमयति तापं हृदि प्रवृत्तं सः ।
शुचमनिराकुर्वाणैर्मितनिर्वाणैः किमन्यगीर्वाणैः ॥ २ ॥

श्रुतिशास्त्रगीयमानं निष्परिमाणं तथा निरुपमानम् ।
शंभो तव महिमानं कस्तुष्टूषुर्लभेत सीमानम् ॥ ३ ॥

सत्यां तव हि कृपायां तव पदभक्तिं गिरीश समुपायाम् ।
स्थितिमथ सौख्योपायां कलयेयं सद्गतिं च निरपायाम् ॥ ४ ॥

विमलपयोदाभसितं स्फुरति यदङ्गेषु सर्वदा भसितम् ।
कण्ठशिरःश्रुतिभुजगाः स्फुरन्ति फणमणिमरीचिभिर्भुजगाः ॥ ५ ॥

यद्यपि चर्म वसानो दृष्टोऽसि त्वं शुभा हि दिवसा नः ।
अवतु दया तव सा नः फलति सुखाब्धिर्यया निरवसानः ॥ ६ ॥

श्रुतिशास्त्रदुर्निरूपो वपुरर्धाकलितवरतनूरूपः ।
अपि चक्षुषा विरूपो वितरसि भजतामभीष्टमनुरूपः ॥ ७ ॥

[1] Based on the MS. No. PM 2906 (D. C. No. 1240). It is collated with the *Śaṃkaragurukulapatrikā* (vol. I, no. 1, 1939, pp. 7-8) which however shows no significant variants. Two other Stotra-s, *Haristuti* and *Hariharastuti* by this author are available in the same MS. The author was the son of Lakṣmī and Veṅkṭeśa and belonged to the Vājasaneyiśākhā. For further details see D. C. vol. VI (Grammar, etc.), No. 748.

गङ्गा बहुकल्लोला जटासु चलितुं न चाशकल्लोला ।
भक्तजनैः स्नपितो यं बहु मनुषे कलुषमल्पमपि तोयम् ॥ ८ ॥

शैलदुहित्रा तारं समुपदिशसि यो भवाम्बुधित्रातारम् ।
गतकिल्बिषभारोऽहं हृदये त्वां भावयामि वृषभारोहम् ॥ ९ ॥

समधिष्ठितकैलासो दीनोद्धारैकनिश्चितविलासः ।
उमया सदा विहरसे ममापि चिन्तां त्वमेव परिहरसे ॥ १० ॥

इति श्रीनिवासविरचिता हरस्तुतिः संपूर्णा

---

## ५०. हालास्यनाथदण्डकम्[1]

शुभसमुदयमन्दिराम्भोजसंभूतबृन्दारकेन्द्रादिबृन्दारकप्राज्ञबृन्दारकाश्रान्त-मन्देतरानन्दसंदोहसंदायिहृद्यानवद्याद्भुताधित्यकाभागसंरूढमन्दारकल्पद्रुमोद्यानसं-फुल्लपुष्पासवासारधारासरत्सारिणीधारणीवारसंपातभूरीकृतावार्यमाधुर्यसौरभ्यरङ्गत्-तरङ्गातिसंबाधगङ्गाझरीतीरगाङ्गेयसत्सैकतश्रेणिकाश्रेणिकासंविशद्भूरिभूत्यङ्गरीगाङ्क-भद्रालयीभूतरुद्राक्षदामाभिरामोज्ज्वलद्भक्तिभारार्जिताग्रीयगाङ्गेयजाम्बूनदाम्भोज-मुख्यप्रसूनादिकारब्धचन्द्रावतंसाच्छलिङ्गार्चनासक्तगौरीशभक्ताग्रणीमण्डलीमण्डिते सर्वसर्वंसहाभृत्प्रतीतप्रभावाञ्चिते हेमवल्लीमतल्लीसमुत्फुल्लसन्मञ्जरीपुञ्जसौभाग्यसं-दर्शनानन्दपुञ्जीभवन्मञ्जुगुञ्जद्द्विलारातिनीलातिनीलोरुगन्धद्विरेफप्रवेकोदितोच्चण्ड-लोकत्रयीनिर्जयोत्साहसंनद्धकंदर्पबाहूबलाकृष्टवेलद्धनुःशिञ्जिनीगुञ्जिताडम्बरोदार-झंकारसंनादितानेककुञ्जोदरावासगन्धर्वसिद्धाङ्गनाकिंनरीपन्नगाणूदरीवारमोदादरा-रब्धवादित्रसंभिन्नसर्वप्रियंभावुकोदीर्णकात्यायनीकान्तकान्ताद्भुतोदन्तसंतानिताय-

[1] Based on the MS. No. 66595 (D. C. No. 1241).

न्तशान्तामलस्वान्तसंतोषदानैकतानातिमानस्फुरत्तानसंताननानाजगन्मोहनग्रावविद्रा-
वकस्वादिमोन्मेषगानामृतोदन्वदाभोगकल्लोलमालापरीतप्रपातावृते पावनाम्नायवागञ्च-
लाम्रेडिते प्राक्तनानेकजन्मान्तरोपात्तसत्कर्मपारंपरीपाकसंसिद्धभाग्योल्लसल्लम्बिकारा-
जयोगप्रतीतप्रभावैकहृष्यत्सहस्रारनीरेजनिर्यन्त्रणोद्यत्सुधासारधारानिशास्वादसाहित्य-
संवित्सुखाखण्डसन्मात्रवस्त्वैकतापन्नचेतोमहायोगिवर्यालयीभूतनैकायतप्रौढतेजोम -
णीकंधरामन्दराजीविराजन्नितम्बावलम्बातिसंबाधकादम्बिनीडम्बरोद्यत्कदम्बाटवीरम्य-
वाटीकदम्बीभवच्छंभुदासाग्रणीनिस्तुलस्तोत्रतारारवापूर्यमाणाम्बरालम्बिदिग्जालकूलं -
कषोत्तुङ्गजाम्बूनदानेकशृङ्गप्रभोल्लासकैलासशैले भवानीभवानीहगत्यद्भुतोद्यद्विलासैक-
मूले मदेभाननस्कन्दनिःसीममोदोदयच्चारुलीले मनोवागतीतातिवैपुल्यवैमल्यसौ-
गुण्यसंभाव्यमध्यस्थलीरत्नसौधान्तरोद्भासमानेऽसमाने सदादेवसेवामिलद्देवनिर्वेल-
हेवाकसंमर्दनिःसारणोद्दामहुंकारतण्डुप्रचण्डाग्रदण्डाभिघातोद्दलत्कोटिकोटीरकोटी -
गलद्दिव्यमाणिक्यधूलिच्छटापातनित्यप्रसूनोच्चयासारसंपातकिंमीरितान्तःसभामण्ट -
पाभ्यन्तरे नव्यरत्नाङ्कुरद्योतविद्योतिताशान्तरे ।

शान्तिदान्त्यादिकास्तीर्णविस्तीर्णपुञ्जीभवद्विद्युदुद्दामधामप्रबन्धाभिसंबद्धन-
व्येतरप्रस्फुरद्वैखरीशेखराभासुरोंकारनिर्वर्तिताग्रीयसिंहासनासीनमीशं महेशं गिरीशं
मनोवागतीतं वरेशानमव्यक्तमानम्रलोकालिनिर्णिक्तभाग्योदयं भद्रविश्राणनाभद्र-
विद्राणनोन्निद्रकारुण्यधारासमाविष्कृतागण्यलावण्यतारुण्यभास्वज्जगन्मोहनाकारमी -
क्षालवप्राभवोदीतहैरण्यगर्भाण्डकाण्डप्रकाण्डप्रकारप्रभूताचरस्थावरान्याखिलापारव -
स्त्वन्तरान्तर्बहिःपूर्णमस्तान्तमानोदयास्तोकभाश्चण्डधामार्बुदोच्चण्डनैजार्चिराडम्बरा -
पूरिताजाण्डरोदःकरण्डाशमच्छाच्छराकासुधाभानुकोटिप्रभाखर्वगर्वैकनिर्वापणोदार-
गौरप्रतीकच्छविच्छादिताशेषदिग्जालकूलं तटित्पुञ्जरञ्जज्जटावीथिकान्तर्नटद्वाहिनी-
पूरगम्भीरसंभारसङ्गोत्तमाङ्गस्फुरच्चारुकोटीरहीरावलीसान्द्ररुक्चन्द्रिकासारसंपूर्णच -
न्द्रायितार्धेन्दुचूडं मुनिव्रातनीरागशान्तामलस्वान्तनीडोद्भवोदारनीडं श्रवःकुण्डली-
भूतसन्मण्डजातं फणीमण्डलीरत्ननिर्यत्ननिर्यन्मयूखालिकिञ्जिल्किताच्छात्मगण्डं सु-
धासूतिरेखासुधाबिन्दुपारंपरीपातशीतीभवज्ज्वालफालानलाक्षं वरीयोऽब्जिनीनाथ-

चन्द्रात्मकात्मीयनेत्रद्वयापाङ्गरङ्गस्थलीनानटल्लासिकावर्यचर्यावहोद्यद्दयाह्लादिनीपूर-पोप्लूयमानातिशीतावलोकावितानप्रलोकं समुत्तुङ्गनानासमानाननद्योतमुद्द्योतमाना-नवद्याच्छमन्दस्मितज्योत्स्निकापूरसंदर्शितात्मीयनिर्णिक्तसत्त्वस्वभावं जगद्यातनोत्पा-दनक्रूरहालाहलाहंक्रियाच्छेदनप्रक्रियाख्यापितानीलकण्ठं कराम्भोजरङ्गद्वराभी-तिमुद्राकुठारैणमामुक्तमुक्तागुलुच्छाधरत्नावलीमुख्यभूषासमुद्द्योतितोदारवक्षःप्रघाणं त्रिलोकीसुखावाससीमाविभागावभास्वद्वलीनित्यरम्योदरं चारुशोभाभिसंभिन्ननाभिं कटीनद्धजाम्बूनदाभाम्बराच्छादिताच्छोरुजङ्घं सुधाम्भोधिनाथादिमादित्यसेवाति-हेवाकसंमर्दसंसक्तकोटीरकोटिच्छटारत्ननीराजिताङ्घ्रिद्वयं वर्यसर्वाभिनन्द्याङ्गसौन्दर्य-सारापगानीरधिं वारिधिप्रौढतूणीरसारम् ।

सदा वामपर्यङ्कपीठाधिरूढामगूढप्रभावामुमां प्रत्नवाणीशिरोलालनीयां नवोत्फुल्लनीरेजनीमेचकामानमन्मानसध्वान्तनिर्मोचकामुत्कदम्भीभवन्मत्तलोलम्बजा-लातिनीलोल्लसत्कुन्तलालंकृतां कान्तसीमन्तसीमान्तिकन्यस्तसिन्दूररागारुणामम्बिका-मम्बुजालम्बितस्फीतबिम्बोकनैजाम्बकां विद्रुमप्राभवोद्रेकविद्रावकारुण्यभद्राधरां च-न्द्रिकामन्दमन्दाक्षसंदायिमन्दस्मिताखण्डराकासुधाधामबिम्बाननां प्रौढजम्बीरगम्भी-रिमाक्षुद्रविक्षोभदानैकदक्षोरुवक्षोजकुम्भां कलालापिवीणामृदुक्वाणवाणीं सरोजात-रागाख्यरत्नावलीनद्धसत्कङ्कणोद्भूतबालारुणारुण्यभास्यूतवज्राङ्गुलीयोज्ज्वलत्पाणि-मेणीदृगन्तान्तरङ्गायितापाङ्गनिर्यत्कृपाधोरणीशीतलालोकविश्राणिताम्भोजसंभूतमु-ख्यामरप्रार्थिताभीष्टजालामनायासपक्षाग्रसंवेल्लनोत्पादिताजाण्डपारंपरीपालनात्मीय-लीलां सदातृप्तजाम्बूनदोद्भासिबालारुणाशोणकौसुम्भदिव्याम्बरप्रावृतामस्तचाञ्चल्य-सौदामिनीवीतकादम्बिनीडम्बरालम्बिनीमङ्घ्रिपद्मार्चनोदित्वरानन्दवृन्दारकेन्द्रार-विन्दाननावृन्दपौरंदरोद्यानसद्यःसमानीतमन्देतरस्यन्दिमारन्दबिन्दुच्छटानित्यसंदा-नितोन्निद्रमन्दारमुख्यप्रसूनप्रवेकप्रतीतावदातप्रभाक्रान्तनखज्योत्स्निकापूरसंपूरिताशेष-दिक्चक्रवालां मरुत्कामिनीकङ्कणोद्यज्झणंकारहस्तारविन्दोच्चलच्चामराधूतकर्णावतं-सायितोत्फुल्लकल्हारनिर्हारिसौरभ्यलोभापतल्लोलल्लोलम्बमालाविनीलालकामिन्दिराश-स्तहस्तारविन्दादरोदस्तरत्नामलादर्शसंदर्शनव्यक्तनैजानुबिम्बस्फुटख्यापिताशेषवस्तु-

व्रजान्तर्गतात्मीयरूपामतिप्रश्रयोदीर्णभक्तिद्रवार्द्रीभवन्मानसाच्छाच्छचीवर्यचातुर्यवि-श्राणितानर्घ्यकर्पूरताम्बूलराजत्कपोलां रहः शारदासंभ्रमाख्यातहैरण्यगर्भाण्डमध्य-स्थलोकालिदैनंदिनाशेषचर्यासमाकर्णनासक्तकर्णामपर्णां दिशानाथकान्ताभिरश्रान्त-सेवासमानीतचामीकरामत्रविन्यस्तपत्रोर्णशाटीलसद्दुकूलपासहारिद्रपिष्टातनीहारसा-राम्बुगोशीर्षकर्पूरकस्तूरिकावर्यमार्जारिकागन्धचेलीमदामोदयुग्गन्धसाराग्रलाक्षार-साशेषभूषाप्रसूनोच्चयस्रब्व्यतल्लीपतद्ग्राहभृङ्गारवीटीजलार्द्रासनाथात्महस्ताभिरासेवितां संभ्रमारब्धगान्धर्वगानामृतोदन्वदुद्वेलमाधुर्यसङ्गाधिकोल्लासलास्यक्रमारम्भसंभावनी-याङ्गहावाप्सरःकिंनरीभोगिशातोदरीसादरोपासितामक्षयानन्दचिद्विग्रहामक्षयामीक्ष-माणां क्षमाभृत्कुलेशानबालाम् ।

अबालानुरागेण दानाभिलाषाभिसंपादनैकानुकम्पासमाविष्कृताप्राकृताकार-शोभं महादेवमत्यन्तसत्त्वप्रतीतात्मचर्यामहायोगिवर्याः सदा नैजसन्मानसाम्भोज-सिंहासने भावयन्तोऽप्ययं वस्तुतो निस्तुलो वाङ्मनोऽतीतसर्वान्तराखण्डनीरूप-संवित्सुखात्मेति यं चिन्तयन्तो भवान्निर्वृताः सर्वतो येन डिम्भो मृकण्डोः पुरा कालपाशेन कण्ठे निबद्धो दृढं मृत्युवक्त्रार्धजग्धोऽपि निःशेषपाशच्छिदाधुर्य-यापाङ्गदृग्धारया लीलया पालितः प्रापितो बालचन्द्रावतंसेन जैवातृकत्वं चिरं यस्य शीर्षाङ्घ्रिनीरेजसंदर्शनोद्योगिनावब्जजाब्जालयानायकावक्षमावीक्षणे हंस-भूधाररूपाश्रितौ यः पुराखर्वदुर्वारगर्वाधिकोदीर्णलोकैकविद्वेषिघोरत्रिसंख्यापुराधीश-दैत्याधिपोद्वेलबाहूबलोत्कूलिताभीलमन्देतराक्रन्दवृन्दारकाभीतिदानैकतानस्फुरन्नि-स्तुलोदन्तहस्तारविन्दः सुपर्वारिगर्वैकनिर्वापणायोद्यतस्तत्क्षणायातनैलिम्पनद्वाहिनी-जालकं प्लवाणीचतुस्तुङ्गरङ्गत्तुरङ्गाभिसंनद्धचक्रीकृतादित्यचन्द्रातिनिस्तन्द्रशोभो-ज्ज्वलत्सर्वसर्वंसहारूपसत्स्यन्दनं काञ्चनक्ष्माधरोदारकोदण्डमुच्चण्डकाण्डप्रकाण्डी-भवत्पुण्डरीकाक्षमक्षय्यतूणीभवद्वाहिनीनायकं वर्यमौर्वीपदन्यस्तदर्वीकराधीश्वर-च्छादितो युद्धसाहाय्यसंनद्धमारात् परीतं निराकृत्य निःसीमनैजप्रभावाधि-काम्भोधिगाम्भीर्यलेशैकदेशप्रकाशाय सद्यःसमाविष्कृतानादरस्मेरचञ्चद्दृगाधान-मात्रेण निर्लेशमुन्मूलितं वैरिसंघातमापादयन् सर्वलोकार्तिमुद्रामभिद्रावयन् नित्य-

वन्दारुवृन्दारकामन्दवृन्दं वितेने सदा कन्दलत्तुन्दिलानन्दसंदानितं तादृशं देव-देवादिमं देवतासार्वभौमोत्तमं चारुचन्द्रावतंसाङ्घ्रिनीरेजनिस्तन्द्रभृङ्गायितस्वान्त-गङ्गाधराख्येशदासान्तरङ्गोऽहमात्मान्तरङ्गाच्छसौधान्तराले सपर्याभिरार्याभिराराध्यनिध्यातमध्यात्मदीपं मनोमेदुरं तं हरन्तं चिरायान्तरं तीव्रसंतापचिन्ताभरं मामकोद्दामभाग्योदयं भूधराधीशकन्यामनोहृद्यमीशं प्रपद्येऽनवद्यं चिदानन्दमाद्यम् ।

यः कदाचिन्मदावेशनिःशङ्कलङ्केशबाहूबलोन्नीतकैलासशैलाधिकाधूतगौरी-परीरम्भसंभावनारम्भजृम्भन्महानन्दसंदानितः पादसेवासमुद्युक्तभक्तार्थसंपादनैकानु-कम्पादृताकारवत्त्वापदेशेन संचालितं चाचलं चिन्तयन् वर्यवाराणसीं यावनव्रात-सद्यःसमुत्पद्यमानव्यथाधूपितामाविरिञ्चालयाहीन्द्रलोकं महाशांभवस्थानभूषायमाणं समस्तागमाम्नायगीतं निरस्तार्हतोदीर्णचार्वाकजातं सदापूत**हालास्य**नामाद्भुतक्षेत्रम-च्छेद्यसंसारपाशैकदात्रं पवित्रं जगत्क्षोभकल्पावसानेऽप्यसंजातविक्षोभमक्षीणलक्ष्मी-विलासालयं संततापारनीपाटवीप्रावृतं हेमपद्माकरोत्फुल्लहेमारविन्दस्रवत्स्वादुमा-ध्वीकधारानिशास्वादमाद्यन्नलिश्रेणिझंकारसंनादिताशान्तरं देवकान्तानिशाराध्य-मीनाम्बिकासुन्दरेशाद्भुतानेकलीलास्पदीभूतमेकान्तनित्यात्मनीनं च संचिन्त्य तत्रैव माहेशदासाग्रगण्येन जन्मान्तरोपार्जितामेयभाग्योल्लसन्**मुद्दुरामा**ख्यभूदेववर्येण सत्त्वैकसारान्तरोदीतनिर्णिक्तनिःसीमभक्त्या प्रकृत्याऽनिकृत्या नियत्या महत्या स्वशक्त्यानुरक्त्यानुयुक्तेन युक्त्या समुत्पादिते शातकुम्भादिसंभारसंभासमानाति-गम्भीरसर्वप्रियंभावुकानेकपाञ्चालिकागुम्भसंभावितस्तम्भनित्याधिकोत्तम्भिते मेरुको-टिप्रतीकाशगाङ्गेयरङ्गत्समुत्तुङ्गशृङ्गोत्तमाङ्गे स्फुरद्गोपुरद्वारसालान्तरागारकल्याणपारं-परीनिर्भरोदारगर्भालयप्रौढहैरण्यगर्भाण्डरोदःकरण्डार्भकौपम्यभास्वन्महामण्टपाखण्ड-लाखण्डदीव्यत्सुधर्मासधर्माग्रचित्रानिशागण्यसागण्यपण्यालयीभूतराजद्वरेण्योऽभर-ण्यप्रभावत्सभाचन्द्रशालादिमोद्देशविद्योतमानेऽसमाने नवद्योतमाने सुमेरूज्ज्वलत्कंध-राभोगहृद्येऽनवद्ये महाहेमनालावलम्बातिसंबाधपद्माकृतिस्फाटिकानेकदीपाच्छगुच्छ-प्रभाभासुरे संततामुक्तमुक्तावितानान्तरे नीरसुगर्भनिर्भेदनारम्भसंरम्भसंभिन्नकाण्ड-ध्वजानद्धपट्टांशुकाधूननज्ञापिताघौघनिःसारणे सान्द्रसंबद्धरम्भाफलोद्गुच्छमुक्तागुलु-

च्छालिसंफुल्लकल्हारमल्लीमतल्लीप्रसूनाम्रपत्रालिशोभालसत्तोरणे दूरनिःशेषविद्रावितो-
पप्लवाङ्कूरगन्धे निसर्गादिव स्वर्गभूमध्यलोकावतीर्णे सदानिद्रभद्रैकतानस्फुरच्छाश्व-
तोन्निद्रसंपद्धुराबन्धुरे सुन्दरेशालयाग्रीयभूषायिते दिव्यसन्मन्दिरे सुन्दरे सुस्थि-
रामासिकामात्मनीनैरशेषैर्मुदासौ मदेभाननस्कन्दमुख्यैः स्वशक्त्या महत्या परा-
शक्तिमूर्त्या समासाद्य साकं चिदानन्दरूपः शिवो विश्वनाथः सपर्याभिरार्याभिरारा-
धितः सुप्रसन्नः कृपासारदृष्ट्या सदा संदिशन् राजते नित्यकल्याणपारंपरीं
तादृशं देवमुद्यन्तमेवाद्य हृद्यं प्रपद्येऽनवद्यान्तरात्मानमाद्यं हृदा भूयसे श्रेयसे ।

गौरीं रावणबाहुकम्पितमहाकैलासशैलासिका-
निर्विण्णां गिरिशो विचिन्त्य यवनाक्रान्तेति वाराणसीम् ।
हित्वासौ निज**मुद्दुराम**रचिते सौधे वसन् मोदते
हालास्येऽखिलपूजितो गिरिजया श्रीविश्वनाथोऽधुना ॥

इति श्रीहालास्यनाथदण्डकं समाप्तम्

---

# NOTES

p. 1, Stotra no. 1: Mānasapūjā, 'mental worship' without any external objects, is one of the favourite ways of expression of Stotra writers. For similar Stotra-s in this volume, see nos. 3, 17, 29 and 41.

,, v. 3c: गुग्गूल = गुग्गुलु = a fragrant gum resin.

p. 2, v. 5: Reminiscent of the verse त्वमेव माता च पिता त्वमेव.... (गान्धारिवाक्यम्) *Pāṇḍavagītā*, v. 28 (chanted by Gāndhārī).

,, v. 6: Similar to इतो न किंचित् परतो न किंचित्.... *Śāntiśataka* of Śilhaṇa (Schönfeld's ed., Leipzig, 1910, p. 88).

,, v. 7: नागाननाय for गजाननाय will remove the metrical defect.

p. 3, Stotra no. 2: Title based on the number of verses. The following Stotra-s in this volume are named on the basis of the number of verses: Nos. 2, 4, 7, 8, 9, 12, 14, 25, 30, 31, 32, 34, 35, 37 and 45.

,, v. 3c: Saṃdhi will make the line metrically defective.

p. 4, v. 5c: प्रणत्वा is archaic (cf. Pāṇini VII. 1. 37).

,, Stotra no. 3: It is interesting as mentioning several of the South Indian dishes and drinks and materials used in the worship of the God during festival days.

p. 5, v. 4b: पारीन्द्रः = a lion.

,, v. 5b: वेशन्तः = a small pond.

p. 6, v. 7c: भर्मन् = gold.

,, v. 9c: आनतपञ्चतारे = भक्तमृत्युनिवारक.

p. 7, v. 14d: निलिम्पनाय = अङ्गरागकर्मणे = for application as unguent after bathing.

p. 8, v. 21c: दर्पकः = Cupid.

p. 9, v. 24a: दधित्थः = कपित्थः = wood apple.

p. 10, v. 31a: ताच्चुत ?

p. 12, v. 43c: तीव्रम् = त्वरितम् = rapidly.

p. 14, v. 4b: नराशिन् = निर्ऋतिः = the regent of the south-western intermediate quarter or Rākṣasa-s.

p. 15, v. 6d: केशवभागिनेय = Ṣaṇmukha, son of Durgā, Kṛṣṇa's sister.

p. 16, Stotra no. 5: Keśavadīkṣita who is saluted in the first verse of the Stotra is the author of the *Mahālakṣmīdaṇḍaka* found in the same MS. It is included in part II of the *Stotrasamuccaya*.

,, v. 2a: अम्बुजार्भकम् = child of the lotus = Brahmā.

p. 21, Stotra no. 6: This Stotra was printed in Kannada script in the collection *Subrahmaṇyastotrakadambam* published by the temple authorities of Kukke Subrahmanya, South Kanara Dist. (2nd ed., 1947).

p. 24, v. 15d: the vowel 'e' in the word कुक्के (also in v. 20 below) is pronounced as the short 'e' of the vernaculars. In *pāda* c read सङ्गं.

p. 25, v. 19b: बिलम् = हृदयम्.

p. 28, v. 32c: अष्टभोगाः = Eight objects of enjoyment; they are: food, drink, betel roll, flowers, sandal paste, clothes, bed and ornaments. See Apte's Dictionary, s. v.

p. 29, Stotra no. 7: For the six hills associated with the God Subrahmaṇya, referred to in the text, see Introduction, p. 11 f.

,, v. 4c: Read स्वामिक्षितिधरपते.

p. 33, v. 15d: परवृत्त्यै = to attain the highest state.

p. 35, v. 37d: कुलिका = huntress.

p. 46, v. 151a: मूक = the author of the *Mūkapañcaśatī*.

p. 55, v. 233c: कत्यं = कुत्रभवम् = Where indeed!

,, v. 237d: कटिशून्ये = कृशोदरि = of slim waist.

p. 60, v. 287cd: The devotees become Indra or Brahmā.

p. 62, Stotra no. 10: For another MS. of this work, see no. 1519 B in the Descriptive Catalogue of the Curator's Office Library, Trivandrum.

p. 67, Stotra no. 11: It summarizes the story of the *Durgāsaptaśatī* (*Devīmāhātmya*) from the *Mārkaṇḍeya-purāṇa* (chs. 80-5). Since the author refers to Mukkola in the last verse he

must have belonged to Kerala. Muktinilaya is the famous shrine of Devī in praise of whom the reputed scholar Nārāyāṇabhaṭṭa composed the *Śrīpādasaptati*. See K. Kunjunni Raja, *The Contribution of Kerala to Sanskrit Literature*, University of Madras, 1958, pp. 28, etc., Index, s. v.

p. 67, v. 1d: दुर्गायताम्=दुर्गमिवाचरतु=Be (for my protection) like a fortress.

p. 73, Stotra no. 13: See Introduction.

,, v. 7a: अवलग्नः=waist.

p. 74, Stotra no. 14: The name of the temple tank referred to in verses 40, 59, 75 and 95 is spelt both as मङ्कण and माङ्कण in the MS. For the मङ्कल, another variation of the word by which the tank is called now, see below, p. 164, v. 26a.

,, v. 2b: कल्यान्=healthy.

,, v. 4d: छदनम्=petal.

,, v. 5d: षडध्व=six ways of worship, known in the Tantra-śāstra.

p. 76, v. 22a: सामजः=Elephant.

,, v. 23d: Cf. यस्य निश्वसितं वेदाः—introductory verse of Sāyaṇa's commentaries on the Veda-s.

,, v. 25d: Read अपारः at the end.

,, v. 26d: धीवरदौहित्र=Vyāsa.

p. 77, v. 34c: मृगचक्रवर्तिपत्रा=सिंहवाहना.

p. 78, v. 41c: रोपः=an arrow.

p. 80, v. 61b: आली=Bridge.

,, v. 65c: अर्वास्यः=हयग्रीवः=the horse-faced god.

,, v. 68c: परिपणम्=capital, principal theme.

p. 82, v. 79cd: those doomed to fall in Kumbhīpāka hell do not worship her.

p. 83, v. 89d: कुलायम् .... the embodiment of unbounded compassion.

,, v. 93b: अहार्य=Mountain.

,, v. 97d: कर्कास्यः=हयग्रीवः.

p. 84, v. 99b: Read विद्याविमुक्ति°.

,, Stotra no. 15: The first syllable of each of the 28 verses is one of the successive letters of the Mahāṣoḍaśākṣarī-mantra: ह्रीं ह्रीं क्लीं ऐं सौं ओं ह्रीं ह्रीं क ए ई ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं सौं ऐं क्लीं ह्रीं ह्रीं. It is only an elaboration of the well-known Śrīvidyā-mantra (Pañcadaśākṣarī). This device of incorporating the syllables of sacred Mantra-s (e.g. *Śivapañcākṣarīstotra*) or of verses (e.g. *Ācāryadvātriṃśat* on Vedāntadeśika; see D.C., vol. IV, Stotra-s, no. 2825, pt. 2, p. 333) in the Stotra-s was very much in vogue among Stotra writers. See *Bṛhatstotraratnākara* (NSP, vol. II, 1965, pp. 101 ff.) for several Stotra-s on Tripurasundarī. Also see nos. 17, 19, 20 and 21 of this volume.

p. 90, Stotra no. 16: Reṇukā is a form of Devī, popular among the Vīraśaiva-s. There are references in the Stotra to the Goddess residing in Sahyādriśikhara (Western Ghats) in verses 6, 9, 10, 11 and 12 and she is addressed as Śrī-Ekavīrāmbike in verses 6, 8, 11 and 16. The actual place of this shrine associated with this Goddess has to be identified. It must be somewhere in Karnataka.

,, v. 4b: Perhaps read शिखाधौतांशु . . . .

p. 93, Stotra no. 17: This Stotra incorporates the Śrīvidyā-mantra with the addition of ह्रीं at the end. Hence called Ṣoḍaśākṣarī (see note on Stotra no. 15).

p. 96, Stotra no. 18: Varāhamukhī or Vārāhī is another form of Devī, known in the Tantra-s. Stotra-s published under this title in *Bṛhatstotraratnākara* (NSP, II, 1965, pp. 9-11) are different.

p. 98, Stotra no. 19: See note on the Stotra no. 15 above. The first letters of the verses of this Stotra form the Pañca-daśākṣarī-mantra.

p. 100, Stotra no. 20: Dharmāmbikā is the name of the consort of the God Tyāgarāja at Tiruvaiyyaru.

p. 104, Stotra no. 21: The Navākṣarī-mantra, the letters of which form the first letters of the verses in this Stotra, is sacred

to Durgā, and usually repeated while reciting the *Devīmāhātmya*. The Mantra is: ऐं ह्रीं क्लीं चामुण्डायै विच्चे.

p. 104, v. 1: शरणम् at the end would be metrically better.

,, v. 2c: Read सरूपाम् ?

p. 107, v. 9a: वर्गाष्टक = the eight groups of consonants.

p. 112, v. 34b: शाणचक्र . . . = purifying (like a whetstone).

p. 125, v. 30b: गजपञ्चवक्त्र . . . . = gait like an elephant's and waist like that of a lion.

,, v. 30c: कोकारि = Moon.

p. 130, v. 56a: शक्रमेचकमणि = इन्द्रनीलमणि = sapphire.

,, v. 58c: धार्तराष्ट्र = a variety of swan.

p. 132, v. 69b: कुरुविन्द = a ruby.

,, v. 70b: यया + अतिविनयै: .

p. 138, v. 1c: वेतण्ड = an elephant.

p. 139, v. 4b: काकोल = poison.

p. 142, v. 31b: Cf. The story of Tripurasaṃhāra (*Śivapurāṇa*, Yuddhakhaṇḍa, chs. 1-12; *Liṅga-purāṇa*, chs. 71-3). Allusions to the incident are found in several other verses; see p. 139, v. 7, p. 174, v. 31, p. 208, v. 86, p. 217, v. 1, etc.

,, v. 32: The story of Brahmā and Viṣṇu attempting to reach the top and root of the Śivaliṅga has been alluded to here. See also p. 186, v. 86, p. 277. v. 6, p. 288, v. 6.

p. 145, v. 61d: रङ्कु: = an antelope.

p. 149, Stotra no. 27: See Introduction.

p. 151, Stotra no. 28: Eulogy on the 'Forbearance' of God. It is comparable with the *Dayāśataka* of Śrīdhara Veṅkaṭeśa (Ayyāvāḷ). See for the other works on Yoga-Bhakti-Vedānta by this author, Parameśvara-yogin, Introduction to Descriptive Catalogue of Stotra-s, p. xxxiii.

p. 158, v. 40d:<br>p. 159, v. 46b: } मन्तु = fault.

p. 161, Stotra no. 29: See note on the Stotra no. 1 above.

p. 163, v. 15d: पिचुमन्दचूर्ण = Pickle powder made of citron leaves (Veppilaikkaṭṭi in Tamil).

p. 164, v. 26a: मङ्गलतीर्थ by which name it is now known is the same as मङ्कणतीर्थ or माङ्कणतीर्थ referred to in Stotra no. 14 above; see note thereon.

p. 165, Stotra no. 30: See Introduction, p. 13.

p. 167, Stotra no. 31: Another work of this author is the *Saptasthānacampū* (D.C. of Kāvya MSS. no. 1011) and possibly the *Saptasthānacūrṇikā* also (Stotra no. 46, pp. 282-5 below).

p. 169, v. 12a: इङ्गाल = coal.

p. 172, v. 24a: खाटाधीश = Indra.

p. 173, v. 26c: वृष = righteous actions.

p. 174, v. 31: See note on v. 31, p. 142.

p. 189, v. 99d: इष्वास = a bow.

p. 190, v. 104: मेडाळानक = rope to fasten a drifting raft.

p. 195, v. 16: It refers to the rarity of temples dedicated to Brahmā. For the story connected with this, see *Śiva-purāṇa*, Vidyeśvarakhaṇḍa, chs. 7-8.

,, v. 19: Cf. *Bṛhadāraṇyakopaniṣad*, III. 4. 2.

p. 197, v. 27c: उद्गमनीय = washed clothes.

p. 198, v. 33: Cf. *ṚV*, I. 164. 46.

p. 200, v. 46c: प्राहुणिकाः = guests.

p. 201, v. 50: The allusion is to the well-known story of Kaṇṇappa, the hunter. See Stotra no. 27 (p. 149) above.

p. 204, v. 68: An interesting explanation of how the name Jalakaṇṭheśvara is derived.

p. 207, v. 83: The reference is to the story of Haradattācārya, the Śaiva teacher.

p. 208, v. 86b: काश्यपी = the earth. Cf. p. 174, v. 31 above.

p. 211, v. 105: Cf. the *nāndīśloka* of Kālidāsa's *Śākuntala*, for the eight forms of Śiva (*Liṅga-purāṇa*, Uttarakhaṇḍa, ch. 12).

p. 212, v. 107c: उन्मत्तप्रसव = The Datura (Dhattūra in Skt., thorn-apple) flower.

p. 213, v. 1: Śivagaṅgā is the name of the tank at the Naṭarāja temple of Chidambaram (cf. v. 32 below) and Śivakāmī is the consort of the God there.

p. 213, v. 4c: घोटकनिगमः = whose horses are the Veda-s (during the Tripurasaṃhāra)—the expression also found in the *Tārāvalistuti* (p. 217, v. 1); cf. p. 190, v. 102. See *Mahābhārata*, VII. 202. 74.

,, v. 5: मालूर = Bilva tree; पील्लूपम = like an insect; अन्धूपम . . . like a frog in a well.

p. 214, v. 10cd: मञ्जुलता = beauty and beautiful creeper.

p. 215, v. 19b: सभाधीशम् = having the moon (the lord of stars).

,, v. 20a: तनुजाया . . . . = body, wife, son and income.

,, v. 20c: नगतनया = the daughter of the mountain; not giving up good conduct.

p. 216, v. 33b: कुट्टाकम् . . . = destroyer of Māyā.

,, v. 33d: किट्टम् = dirt.

p. 217, Stotra no. 34: In the twenty-seven verses of this Stotra are incorporated the names of the twenty-seven asterisms with the *śleṣa*. Some of the names are in the Dravidian form, e.g. पूरं in v. 11 and पूरट्टं in v. 25.

p. 218, v. 7: The allusion is to the saving of Mārkaṇḍeya.

,, v. 8a: शातक्रतवशिला = sapphire.

p. 220, v. 27a: अमृतभुगापगा = the river Gaṅgā.

p. 232, Stotra no. 36: This Stotra in 64 verses gives the meaning of the *Rudrapraśna* (=*Śatarudrīya* in *Taittirīya-saṃhitā*, IV. 5. 1 ff.). Each verse is appended with a remark referring to the portion of the original text summarized in the verse. Verses 55-63 are composed following the practice of recitation—supplying the words needed from the preceding portion (*anuṣaṅga*)—rather than the actual reading of the text. The author was the son of Veṅkaṭeśa and Apītastanī and belonged to the Bharadvāja-gotra.

p. 227, v. 17d: स्तायूनाम् = of thieves.

p. 228, v. 22d: गृत्सः = dextrous.

p. 230, v. 30: One *pāda* is missing; the MS. repeats the second *pāda* of the first half.

p. 236, v. 53a: मीढुष्टम = most bountiful.

p. 237, v. 57a: सस्पिञ्जराः = explained as शष्पपिञ्जराः by Sāyaṇa; of grass-green-reddish colour?

p. 238, v. 62c: चतुर्दशेषु. Cf. *Taittirīyabrāhmaṇa*, III. 11. 2. 2.

,, v. 63c: कुर्मे archaic.

p. 249, v. 49d: धूमयोनिः = cloud.

p. 251, v. 56b: करटिन् = an elephant.

p. 261, Stotra no. 41: See Introduction.

p. 271, v. 8: See *Kaṭhopaniṣad*, II. 2. 15.

p. 279, v. 22d: अमील = distress.

,, Stotra no. 45: Paiṅganāḍu Gaṇapatiśāstrin was a renowned scholar of recent times (A.D. 1871-1913). He was a prolific writer and two paper MSS. (PM 255 and PM 977) containing several of his short works are available in the Adyar Library. For further details, see Introduction to Stotra Catalogue, p. xxx.

p. 282, Stotra no. 46: On the basis of the similarity of the diction and vocabulary it could be inferred that this Stotra was by Veṅkaṭasubbakavi, the author of the *Saptasthānacampū*. See note on the *Japyeśāṣṭaprāsaśataka* above. Some of the names of flowers and trees mentioned in it are obscure and could not be traced in the dictionaries.

p. 288, v. 10a: *Śatarudrīya*, a portion of the *Yajur-veda*, also known as *Rudrādhyīya* or *Rudrapraśna* or *Namakacamaka*. See above, Stotra no. 36.

# INDEX OF STOTRA-S

# INDEX OF AUTHORS



---